उक्तविज्ञानमयस्यैकीभावं दृष्टांतेन स्पष्टयति—

**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥**

नद्यः गंगायमुनाद्याः स्यंदमानाः गच्छंत्यः नामरूपे नाम च रूपं च नामरूपे गंगाद्यात्मके विहाय त्यक्त्वा यथा समुद्रेऽस्तं गच्छंति समुद्रं प्राप्य यथा समुद्ररूपा भवंति तथा विद्वान् आत्मज्ञः नामरूपात् देवताद्यात्मकात् विमुक्तः रहितः सन् परात् व्याकृतपरादव्याकृतात् परं उत्कृष्टं दिव्यम् प्रकाशरूपं पुरुषं सर्वत्र पूर्णं ब्रह्म उपैति प्राप्नोतीत्यर्थः ॥ ८ ॥

ब्रह्मविद्याप्राप्तौ सत्यां न कोपि मोक्षे प्रतिबंधोऽस्तीत्याह—

**स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥**

यः कोपि पुरुषः ह वै निश्चयेन तत् प्रकृतं परमं ब्रह्म सर्वोत्कृष्टं ब्रह्म वेद अहमेव ब्रह्मास्मीति साक्षाज्जानाति सः ब्रह्मवित्पुरुषः ब्रह्मैव भवति ब्रह्मस्वरूप एव भवति। किञ्च अस्य विदुषः कुले पुत्रादिवंशे शिष्यादिवंशे वा अब्रह्मवित् ब्रह्मज्ञानरहितो न भवति ब्रह्मविदेव भवतीत्यर्थः । किञ्च तरति शोकं इष्टवस्तुवैकल्येन मनसि जायमानः संतापः शोकः जीवन्नेव तद्रहितो भवतीत्यर्थः । पाप्मानं धर्माधर्माख्यं पापं तरति अतिक्रामति गुहाग्रंथिभ्यो बुद्धिगताऽविद्याग्रंथिभ्यः विमुक्तः रहितः सन् अमृतो भवति मुक्तो भवतीत्युक्तमेव भिद्यते हृदयग्रंथिरित्यादिना ॥ ९ ॥

ब्रह्मविद्यासंप्रदाने विधिमुपदर्शयन्नुपसंहरति—

**तदेतदृचाऽभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयंतः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥**

तदेतत् ब्रह्मविद्यासंप्रदानविधानं ऋचा मंत्रेण अभ्युक्तं कथितं तं मंत्रं

दर्शयति क्रियेति । क्रियावंतः निष्कामकर्मानुष्ठानेन शुद्धचित्ताः श्रोत्रियाः वेदार्थविदः ब्रह्मनिष्ठाः सगुणब्रह्मोपासकाः श्रद्धयन्तः श्रद्दधानाः संतः स्वयमेकऋषिं एकर्षिसंज्ञकमग्निं जुह्वते जुह्वति । यैस्तु यैश्चाधिकारिभिः शिरोव्रतं शिरस्यग्निधारणरूपं व्रतं विधिवत् अथर्ववेदोक्तविधानेन चीर्णं कृतं तेषामेव उक्ताधिकारिणामेव एतां पूर्वोक्तां ब्रह्मविद्यां ब्रह्मविषयां विद्यां वदेत् ब्रूयात् ॥ १० ॥

उक्तग्रंथाधिकारिणं दर्शयन्प्रकृतकथामुपसंहरति—

**तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥**

**इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥**

**ॐ भद्रं कर्णेभिरिति शांतिः शांतिः शांतिः ॥**

तदेतत् प्रकृतमक्षरं पुरुषं सत्यं त्रिकालाबाध्यं पुरा पूर्वकाले ऋषिरंगिराः अंगिरसनामक ऋषिः उवाच शौनकायोक्तवान् एवमन्योपि विधिवदुपसन्नाय मुमुक्षवे ब्रूयादिति भावः । किञ्च एतत्प्रकृतं ग्रंथं अचीर्णव्रतः न चीर्णं शिरस्यग्निधारणलक्षणं व्रतं येन सः पुरुषः नाधीते न पठति नमः परमऋषिभ्यः परमं ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयस्तेभ्यो नमः । द्विरुक्तिरत्यंतादरार्था समाप्त्यर्था च ॥ ११ ॥

इति श्रीमदुदासीनवर्य्यामरदासपदपद्ममकरन्दतृप्तमानसेन श्रीमदमरदासाख्येन विदुषा रचिता मुण्डकोपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्तिं गता ॥



ॐ तत्सद्ब्रह्मणे नमः ।

# अथ मांडूक्योपनिषदारम्भः ।

## मणिप्रभाव्याख्यासमलंकृता ।

यद्वाचकत्वादोंशब्दः स्तूयते वेदमस्तकैः ।
तं वंदे परमात्मानं कृष्णनामभृतं परं ॥ १ ॥
श्रीगुरूणां पदद्वंद्वं प्रणम्याद्वंद्वतास्पदं ।
मांडूक्योपनिषद्व्याख्या क्रियते पदगामिनी ॥ २ ॥

ॐ कारस्य ब्रह्मवाचकत्वात् वाच्यवाचकयोरभेदस्य लोकप्रसिद्धत्वाद्ब्रह्मनामधेयमोंकारं ब्रह्मदृष्ट्या तावदाह—

**ॐ मित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ॥ १ ॥**

ब्रह्मबुद्ध्या दृष्टः सन् द्रष्टॄन् अवतीत्यों इति शब्द ॐकारानुकरणार्थः तथा च ॐ मित्येतत् ॐ मित्याकारकं अक्षरं वर्णात्मकं इदं विविधप्रतीतिगोचरं चराचरात्मकं जगत् सर्वं निखिलमस्तीति शेषः । तस्य उक्तस्य सर्वात्मकोंकारस्य उपव्याख्यानं उप ब्रह्मधीहेतुत्वाद्ब्रह्मसामीप्येन विस्पष्टं आ आसमंतात्ख्यानं विवरणं क्रियत इति शेषः । भूतं अतीतकालिकं वस्तु भवत् वर्त्तमानकालिकं भविष्यत् अनागतकालिकं इति एवंभूतं सर्वं निखिलं वस्तुजातं ॐकार एव प्रणव एव न त्वन्यत् भूतादिकालिकानां नामाभिन्नत्वान्नाम्नां चोंकाराभेदस्य श्रुत्यंतरसिद्धत्वात् भूतादिकालिकानां नामद्वारोंकारत्वमिति भावः । यच्चान्यत् उक्ताद्भिन्नं यत् कार्य्यगम्यं त्रिकालातीतं उक्तकालत्रयसंबंधशून्यं कालस्यापि कारणमव्याकृतसूत्रात्मकं तदपि उक्तलक्षणमपि ओंकार एव ओंकारवाच्यत्वात् प्रणवात्मकमेवेत्यर्थः ॥ १ ॥

एवमोंकारवाच्यस्य भूतादिकालिकस्य सर्वस्य वाचकेनोंकारेणाभेदमुक्त्वा इदानीमोंकाराभिन्नस्य सर्वस्य ब्रह्मकार्य्यत्वाद्ब्रह्माभेदमाह—

**सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ २ ॥**

हि निश्चितं सर्वं निखिलं एतत् उक्तलक्षणमोंकारमात्रं प्रपंचजातं ब्रह्म सत्यज्ञानानंतलक्षणस्वरूपमित्यर्थः। जडवस्तुन एव ब्रह्मात्मत्वमुक्तं न तु चेतनस्येति शंकानिवृत्त्यर्थमाह अयमात्मेति। अयं अस्मत्प्रत्ययगोचरश्चेतनस्त्वंपदार्थः। ब्रह्म सत्यादिलक्षणः तत्पदार्थः। सः कार्य्यकारणभावं विना ब्रह्मतादात्म्यापन्नः अयमात्मा उक्तलक्षणस्त्वंपदार्थः चतुष्पात् चत्वारः पादा यस्य स चतुष्पात्। विश्वादीनां त्रयाणां विलापनेन तुरीयं प्रतिपद्यतेऽनेनेति करणव्युत्पत्त्या पादशब्दो विश्वादिपरः कर्मव्युत्पत्त्या तु तुरीयपर इति भावः ॥ २॥

कथं चतुष्पात्त्वमित्यत आह—

**जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥**

जागरितस्थानः जागरितं स्थानमभिमानविषयभूतं यस्य स तथा। बहिःप्रज्ञः बहिः स्वात्मव्यतिरिक्तशब्दादिविषयेषु प्रज्ञा बुद्धिवृत्तिरूपा यस्य स बहिःप्रज्ञः। सप्ताङ्गः सप्तसंख्याकानि द्युसूर्य्यवाय्वाकाशरयिपृथिव्याहवनीयाख्यानि अङ्गानि मूर्द्धचक्षुःप्राणदेहमध्यबस्तिपादमुखस्थानीयानि यस्य स सप्तांगः। एकोनविंशतिमुखः ज्ञानेंद्रियपंचकं कर्मेन्द्रियपंचकं प्राणपंचकं अंतःकरणचतुष्कमित्येकोनविंशतिसंख्याकानि मुखानि विषयोपलब्धिद्वाराणि यस्य स एकोनविंशतिमुखः। स्थूलभुक् स्थूलान् शब्दादिविषयानुक्तैकोनविंशतिमुखैर्भुंक्त इति स्थूलभुक्। वैश्वानरः विश्वान्सर्वान्नरान्भोक्तृत्वेन व्यवस्थितान् प्रति धर्माधर्मकर्मानुसारेण सुखदुःखादिकर्मफलप्रापणाद्वैश्वानर इत्युच्यते। यद्वा विश्वे नरा अस्येति विश्वानरः 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घता। विश्वानर एव वैश्वानरः। प्रज्ञादिभ्यश्चेति सूत्रेण स्वार्थिकोऽण्। सर्वपिंडात्माऽनन्यत्वात्। यद्वा विश्वश्चासौ नरश्चेति विश्वानरः उक्तसूत्रेण पूर्वपदस्य दीर्घता विश्वानर एव वैश्वानरः राक्षसवायसादिवत्प्रज्ञादिभ्यश्चेति सूत्रेण

स्वार्थे तद्धितः । यद्वा विश्वेषां नरशब्दवाच्यानां चतुर्विधस्थूलदेहानामधिष्ठाताऽयं वैश्वानरः प्रथमः पादः । उक्तात्मनः प्रथमोंऽशः । न च विश्वस्य तैजसादुत्पत्तेस्तैजसस्यैव प्राथम्यं युक्तं कारणापेक्षया कार्य्यस्य पश्चाद्भावित्वनियमादिति वाच्यम् । प्रविलापनापेक्षयाऽत्र प्राथम्यस्योक्तत्वात् न तु सृष्ट्यपेक्षया। व्यष्टिसमष्ट्योरेकत्वविवक्षणं तु युगपदुभयविलापनेनाद्वैतप्रतिपत्त्यर्थमित्यभिप्रायः ॥ ३ ॥

इदानीं द्वितीयपादमाह—

**स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः**
**प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥**

स्वप्नस्थानः स्वप्नः जागरितवासनाजन्यः स्थानं यस्य स तथा । अंतःप्रज्ञः अंतर्हृदि मानसविषयेषु प्रज्ञा बुद्धिर्यस्य स तथा । सप्ताङ्गः एकोनविंशतिमुख इति पदद्वयं पूर्ववद्व्याख्येयम् । प्रविविक्तभुक् प्रविविक्तं स्थूलात्सूक्ष्मं वासनामयं भुंक्त इति तथा । तैजसः तेजसि वासनामयप्रज्ञायामाश्रयत्वेन वर्तमानः द्वितीयः पादः जागरितानंतर्भावित्वादात्मनो द्वितीयोंऽशः ॥ ४ ॥

तृतीयं पादमाह—

**यत्र सुप्तो न कंचन कामं कामयते न कंचन**
**स्वप्नं पश्यति तत्सुषुप्तं । सुषुप्तस्थान एकीभूतः**
**प्रज्ञानघन एवानंदमयो ह्यानन्दभुक् चेतोमुखः**
**प्राज्ञस्तृतीयः पादः ॥ ५ ॥**

यत्र यस्मिन्काले स्थाने वा सुप्तः उपरतकरणग्रामः सन् कंचन कमपि कामं पुण्यपापहेतुभूतं पुत्रदारादिविषयजातं न कामयते न वाञ्छति कंचन कमपि स्वप्नं शुभाशुभजागरितवासनाजन्यं पदार्थं न पश्यति नावलोकयति तत् उक्तकामाकामनस्वप्नादर्शनरूपं सुषुप्तं गाढनिद्रानिमित्तकमवस्थाविशेषं सुषुप्तस्थानः सुषुप्तं श्रुत्या स्वयमेवोक्तं स्थानं यस्य स सुषुप्तस्थानः एकीभूतः निखिलजगद्बीजस्यावरणात्मकाज्ञानस्यानुपरमादनेकोप्यंतःकरणादिविक्षेपाभावादेकतां प्राप्तः प्रज्ञानघन एव जाग्रत्स्वप्नज्ञानानां कारणरूपेण घन एकपिंडीभावो यस्मिन् सः प्रज्ञानघनः । एवकारान्न जात्यं-

तरं प्रज्ञानव्यतिरिक्तमस्तीत्यर्थः । आनंदमयः स्वरूपसुखाभिव्यक्तिप्रतिबंधकदुःखाभावादानंदप्रायः हि यस्मादानंदमयः तस्मात् आनंदभुक् आनंदं विक्षेपाभावादात्मसुखं भुंक्तेऽज्ञानवृत्तिभिरनुभवतीत्यानंदभुक् । यथा लोके निरायासस्थितः सुखी आनंदभुगुच्यते तद्वत् चेतोमुखः चेतः स्वप्नजागरितं तत्प्रति कारणत्वेन मुखं द्वारभूतो यः स चेतोमुखः नहि स्वप्नजागरितयोः सुषुप्तद्वारं विना संभवोऽस्ति तयोस्तत्कार्य्यत्वादतः सुषुप्ताभिमानी प्राज्ञः चेतोमुख इत्युच्यते । यद्वा आत्मचैतन्यरूपं चेतो मुखं स्वप्नजागरितागमनं प्रति द्वारभूतमस्येति चेतोमुखः । नहि चैतन्यमन्तरेण कापि चेष्टा सिद्ध्यतीति भावः । प्राज्ञः प्रकृष्टे स्वयंप्रकाशानंदात्मनि ज्ञा ज्ञप्तिरज्ञानवृत्त्यात्मको बोधो यस्य सः प्रज्ञः प्रज्ञ एव प्राज्ञः । स्वार्थे तद्धितः । तृतीयः पादः जागरितस्वप्नानन्तरभावित्वादात्मनस्तृतीयोंऽशः ॥ ५ ॥

सर्वस्य कारणत्वादुक्तं प्राज्ञमेव स्तौति—

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्याम्येष योनिः**
**सर्वस्य प्रभवाप्ययौ हि भूतानां ॥ ६ ॥**

एषः प्राज्ञः सर्वेश्वरः सर्वस्य नियंता एषः प्राज्ञः सर्वज्ञः सर्वं जानातीति सर्वज्ञः एषः प्राज्ञः अंतर्य्यामी अन्तरनुप्रविश्य सर्वभूतयमयिता एषः प्राज्ञः सर्वस्य योनिः चेतनाचेतनात्मकनिखिलजगतः कारणम् । उक्तसर्वकारणत्वे हेतुमाह–**प्रभवेति** । हि यस्मात् भूतानां चेतनाचेतनानां प्रभवाप्ययौ उत्पत्तिविनाशौ इतो भवत इति शेषः ॥ ६ ॥

चतुर्थपादमाह—

**नांतःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञं । अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिंत्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपंचोपशमं शांतं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा स विज्ञेयः ॥ ७ ॥**

नांतःप्रज्ञं स्वप्नावस्थायां मनोविरचितविषयज्ञानशून्यं न बहिःप्रज्ञं जागरिते इंद्रियजन्यविषयज्ञानरहितं नोभयतःप्रज्ञं जागरितस्वप्नयोः संध्यवस्थावबोध-

रहितं न प्रज्ञानघनं सुषुप्तावस्थायां जाग्रत्स्वप्नज्ञानानां कारणरूपेण घनीभावानाश्रयं न प्रज्ञं युगपत्सर्वविषयज्ञातृत्वशून्यं नाप्रज्ञं न ज्ञानाभावरूपं अदृष्टं ज्ञानेंद्रियाविषयभूतं अव्यवहार्यं अर्थक्रियारहितं अग्राह्यं कर्मेंद्रियैरगम्यं अलक्षणं अलिङ्गं अननुमेयं इति यावत् । अचिंत्यं अन्तःकरणवृत्त्यविषयभूतं अव्यपदेश्यं शब्दशक्त्यविषयभूतं एकात्मप्रत्ययसारं जाग्रदाद्यवस्थास्वेक एवात्मेत्याकारकः प्रत्ययोऽव्यभिचारिज्ञानमेव सारं प्रमाणं यस्मिन् तत्तथा । यद्वा एक आत्मप्रत्यय एव सारं प्रमाणं यस्याधिगमे तत्तुरीयमेकात्मप्रत्ययसारं आत्मेत्येवोपासीतेति श्रुतेः । प्रपंचोपशमं प्रपंचस्य कार्यकारणरूपस्योपशमोऽभावो यस्मिंस्तत्तथा शांतं अविक्रियं शिवं आनंदस्वरूपं अद्वैतं भेदशून्यं चतुर्थं तुरीयं पादं मन्यंते संख्याविषयत्वाभावेपि पूर्वोक्तपादत्रयापेक्षया चतुर्थमिति कल्पयंते शास्त्रविदः सः वस्तुतः अतुरीयरूपोप्यविद्यया चतुर्थपादत्वेन कल्पितः आत्मा अस्मत्प्रत्ययविषयः सः तुरीयरूपः विज्ञेयः मुमुक्षुभिः साक्षात्कर्तव्य इत्यर्थः ॥ ७ ॥

एवं तत्त्वज्ञानसमर्थानामुत्तममध्यमाधिकारिणां त्रिभिः पादैरात्मन्यध्यारोपितस्य प्रपंचस्य चतुर्थपादेनापवादाद्विज्ञेयमात्मतत्त्वमुक्तम् इदानीं तु येऽधमाधिकारिणोऽसंभावनादिदोषादुपदेशप्रमाणाभ्यामुपस्थापितमप्यात्मतत्त्वं न जानंति तेषामनुकंपयाऽऽरोपदृष्टिमेवावष्टभ्यात्मोंकारयोरभेददृष्टिं विधत्ते—

**सोऽयमात्मा अध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥**

सः चतुर्थपादत्वेन कल्पितोऽयमात्मा अस्मत्प्रत्ययगोचरः अध्यक्षरं अक्षरं वाचकं प्रकरणमधिकृत्य वर्त्तते इत्यध्यक्षरं अक्षराभिन्न इत्यर्थः । किं तदक्षरमित्यत आह—**ॐकार इति ।** ॐकारस्वरूप एवेत्यर्थः । आत्मोंकारयोरभेदे हेतुमधिमात्रत्वसाम्यमाह अधीति । अधिमात्रं मात्रा अकाराद्याश्चतस्रोऽधिवर्त्तते इत्यधिमात्रमित्यर्थः । ननु ॐकारस्यैवाधिमात्रत्वं नात्मनः तस्य पादशो विभक्तत्वादित्याशंक्य मात्राणां पादानां च अभेदमाह पादा इति । पादाः विश्वतैजसप्राज्ञतुरीयाख्याश्चत्वारः । मात्राः अकारोकारमकारार्द्धमात्ररूपाः ।

उक्ताभेदं दृढीकर्तुं व्यतिहारेण निर्दिशति—**मात्राश्चेति**। मात्राश्च पादाः चकार एवार्थकः मात्रा अकाराद्याः पादाः विश्वादिपादस्वरूपा एवेत्यर्थः। अर्धमात्रायास्तुरीयपादत्वात्तुरीयस्य च पूर्वपादत्रयादत्यंतविलक्षणत्वादेवार्धमात्रां त्यक्त्वा शेषमात्रा विभजते अकार इति। अकार उकारो मकार इति इत्याकारिका मात्राः संतीत्यर्थः॥ ८॥

अकारादिमात्राणां पादरूपताविभागमाह—

**जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद॥ ९॥**

जागरितं स्थानं यस्य स जागरितस्थानः वैश्वानरः विश्वश्चासौ नरश्चेति विश्वानरः विश्वानर एव वैश्वानरः वायसादिवत्। अकारः अकारसंज्ञकः प्रथमा मात्रा ॐकारस्याद्यमात्रारूप इत्यर्थः। अकारवैश्वानरयोरभेदहेतुं तयोः साम्यमाह—**आप्तेरिति**। आप्तेर्व्याप्तेः अकारो वै सर्वा वागिति श्रुतेः अकारस्य व्यापकत्वं वैश्वानरस्यापि सप्तांगत्वेन व्यापकत्वं पूर्वोक्तमिति हेत्वर्थः। हेत्वंतरमाह—**आदीति**। आदिमत्त्वाद्वा वाशब्दः पक्षांतरे अकारः उकाराद्यपेक्षयाऽऽदिमान् वैश्वानरस्तु तैजसाद्यपेक्षयाऽऽदिमान् तस्य भाव आदिमत्त्वं तस्मात् आदिमत्त्वसाम्यादित्यर्थः। यद्वा अआइई इत्येवमाद्यपेक्षया अकारस्यादिमत्त्वं ज्ञेयम्। विश्वाकारयोरैक्यज्ञानवतः सादृश्यविकल्पात्फलभेदमाह—**आप्नोतीति**। यः पुरुषः एवं उक्तप्रकारेण विश्वाकारयोरैक्यं वेद जानाति सः ह प्रसिद्धान् वै निश्चयेन सर्वान् अखिलान् कामान् काम्यमानान् पुत्रदारादिपदार्थान् आप्नोति प्राप्नोति आदिश्च महतांमध्ये प्रथमो भवतीत्यर्थः॥९॥

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति। ह वै ज्ञानसंततिं समानश्च भवति नास्याऽब्रह्मवित्कुले भवति य एवं वेद॥ १०॥**

स्वप्नस्थानस्तैजसः पूर्वं चतुर्थमंत्रेप्युक्तः तैजसो द्वितीयः पादः उकारो द्वितीया मात्रा उकारसंज्ञकद्वितीयमात्रास्वरूप एव। उकारतैजसयोरैक्ये हेतु-

माह—**उत्कर्षादिति** । उत्कर्षात् उकारस्याकारादूर्ध्वपाठेनोत्कर्षः तैजसस्य तु विश्वात्सूक्ष्मत्वेनोत्कर्षः तस्मादकारतैजसयोरुत्कर्षसाम्यादित्यर्थः । उभयत्वाद्वा वा इति पक्षांतरे विश्वाकाराभ्यां तैजसोकारयोर्द्वितीयत्वात् तैजसोकारयोरैक्यज्ञानवतः फलमाह य इति । यः पुरुषः एवं उक्तप्रकारेण तैजसोकारयोरैक्यं वेद जानाति ह वै प्रसिद्धः सः ज्ञानसंततिं शिष्यप्रशिष्यादिद्वारा ज्ञानस्य संतानं उत्कर्षति वर्द्धयति समानश्च शत्रुमित्रयोस्तुल्यश्च भवतीति स्पष्टं । प्रत्येकं हेतुफलमुक्त्वा हेतुद्वयसमुच्चयज्ञानफलमाह—**अस्येति** । अस्य उत्कर्षोभयत्वाभ्यां तैजसोकारयोरेकत्वविदः कुले शिष्यप्रशिष्यादिरूपान्वये अब्रह्मवित् ब्रह्मज्ञानरहितो न भवतीति योजना ॥ १० ॥

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदꣳ सर्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥**

सुषुप्तस्थानः प्राज्ञः तृतीयपादत्वेन यः पूर्वोक्तः सः मकारस्तृतीया मात्रा ओँकारस्य तृतीयमात्रारूपो मकारस्वरूप इत्यर्थः । प्राज्ञमकारयोरैक्ये सामान्यं हेतुमाह—**मितेरिति** । मितेः यथा यवाः प्रवेशनिर्गमनाभ्यां प्रस्थपरिमितपात्रेण मीयंते तथा विश्वतैजसावपि लयोत्पत्तिभ्यां प्राज्ञेन मीयेते एवमोंकारसमाप्तावकारोकारौ मकारे प्रविष्टाविव भवतः पुनरोंकारोच्चारणे कृते सति मकारान्निर्गताविव च लक्ष्येते एवमिति हेतोरुभयत्र तुल्यत्वात् अपीतेर्वा वाशब्दः पूर्ववत्पक्षांतरे । अपीतिर्नाम स्वस्मिन्नेकीभावः । ओँकारस्योच्चारणेऽकारोकारावंतिमाक्षरे मकारे एकीभूताविव लक्षेते तथा विश्वतैजसावपि सुषुप्तकाले प्राज्ञे एकीभूताविव भवतः । सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानवतः फलभेदमाह मिनोतीति । यः पुरुषः एवं सामान्यद्वयद्वारेणोक्तं प्राज्ञमकारयोरैक्यं वेद जानाति स इदं विविधप्रत्ययगम्यं सर्वं निखिलं जगत् ह इति प्रसिद्धेन वै इति निश्चयेन मिनोति जगतो मायामयत्वात्मकयथार्थत्वरूपं जानाति । अपीतिश्च अप्येति लीयते जगदस्मिन्निति व्युत्पत्त्या जगत्कारणात्मा च भवतीत्यर्थः । अंगभूतोक्तोपासनत्रयस्य विभागेन फलोक्तिस्तु प्रणवब्रह्मणोरभेदध्यानरूपप्रधानोपासनस्य स्तुत्यर्थं इत्यभिप्रायः ॥ ११ ॥

अंगोपासनमुक्त्वा प्रधानोपासनमाह—

**अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपंचोपशमः शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद ॥ १२ ॥**

**इति माण्डूक्योपनिषत्समाप्ता ।**

अमात्रः अकारादिमात्राहीन ॐकारः प्रणवः चतुर्थः तुरीय आत्मैवेति विज्ञेय इति शेषेणान्वयः । अमात्रपदेनोंकारोऽत्रोक्तः नत्वर्धमात्रा तेनोंकारार्धमात्रयोरभेदोऽवगम्यते । उक्तात्मानं विशिनष्टि—अव्यवहार्य्यः अर्थक्रियाशून्यः प्रपंचोपशमः प्रपंचस्योपशमो लयो यस्मिन्स तथा जगल्लयाधारभूत इति यावत् शिवः परमानंदस्वरूपः अद्वैतः अद्वयो भेदरहितः एवं उक्तप्रकारेण ओंकार आत्मैव सर्वद्वैतकल्पनाऽधिष्ठानत्वेन वर्तमान एव यः उपासकः एवं पूर्वप्रकारेणोंकारात्मनोस्तादात्म्यं वेद जानाति सः आत्मना ॐकारेणालंबनेन आत्मानं पारमार्थिकं ब्रह्मात्मस्वरूपं संविशति सम्यक् प्राप्नोतीत्यर्थः। पदाभ्यास उपनिषत्समाप्त्यर्थः । उत्तमाधिकारी ॐकारद्वारा ब्रह्मविदोंकारमालंबनं नापेक्षते । मंदमध्यमाधिकारिणां तु मात्रापादसाम्यविदां यथावदुपास्यमान ॐकारो ब्रह्मप्रतिपत्तये आलंबनो भवति। उपासकानामोंकारालंबनप्राप्तिद्वारा ब्रह्मप्रतिपत्तिर्भवति । तत्वनिश्चयसमर्थानां त्वोंकारालंबनं विना ब्रह्मप्रतिपत्तिर्भवतीति भेदः ॥ १२ ॥

इति श्रीमदुदासीनवर्य्यामरदासपदपद्ममकरंदतृप्तमानसेन श्रीमदमरदासाख्येन विदुषा विरचिता मांडूक्योपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्तिं गता ।





ॐ तत्सद्ब्रह्मणे नमः

# अथ तैत्तिरीयोपनिषदारम्भः ।

## मणिप्रभाव्याख्यासमलंकृता ।

यतो जातमिदं सर्वं स्थितं यत्र च लीयते ।
सत्यं ज्ञानमनंतं तं नमामि कृष्णनामकम् ॥ १ ॥
विद्याऽऽचार्य्यान् गुरून्भक्त्या गूढार्थानां प्रकाशकान् ।
वरिष्ठान्विदुषां सोऽहं प्रणमामि निरंतरम् ॥ २ ॥
तैत्तिरीयकटीकेयमुपनिषन्मणिप्रभा ।
यथामति मया मृद्वी क्रियते पदगामिनी ॥ ३ ॥

अथ कृष्णयजुर्वेदीयतैत्तिरीयशाखायामुपनिषदारंभः । तत्रोपनिषच्छब्देन ब्रह्मविद्योक्ता, ग्रंथस्तु तदर्थत्वादुपनिषदित्युच्यते । मानांतरेणानधिगतं ब्रह्मास्य विषयः तद्विद्याद्वारा मुक्तिः प्रयोजनं प्रतिपाद्यप्रतिपादकभावः संबंधः साधनचतुष्टयसंपन्नोऽधिकारीत्यनुबंधचतुष्टयं प्रेक्षावतां प्रवृत्त्यंगभूतं तावत्सिद्धम् । अंतःकरणशुद्धिमंतरेण ब्रह्मविद्याप्राप्त्यसंभवादंतःकरणशुद्ध्यर्थं शिक्षा तावदुच्यते । तत्रापि नानाविधविघ्ननिवृत्त्यर्थं शांतिकरं मंत्रं तावदाह—

**ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्य्यमा । शं न इंद्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो ॥**

मित्रः अह्नः प्राणवृत्तेश्चाभिमानिदेवतारूपः नः असाकं शं सुखकृत् भवतु स्यात् । वरुणः रात्रेरपानवृत्तेश्चाभिमानिदेवतारूपः नः असाकं शं सुखकृत् भवतु । एवं शं नो भवत्विति सर्वत्रानुषंगः । अर्य्यमा चक्षुषः सूर्य्यमंडलस्य चाभिमानिदेवतात्मकः शं नो भवतु । इंद्रः बाह्वोर्बलस्य चाभिमानी

देवः शं नो भवतु । बृहस्पतिः वाचो बुद्धेश्चाभिमानी देवः शं नो भवतु । विष्णुः पादयोरभिमानी देवः तस्यैव विशेषणं उरुक्रम इति । त्रिविक्रमावतारे विस्तीर्णपादयुक्त इति तदर्थः । शरीरस्थप्राणकरणाभिनिनीनां देवतानां सुखकृत्त्वप्रार्थना त्वप्रतिबंधेन विद्याश्रवणावधारणार्थो । ब्रह्मणे सूत्रात्मकवायवे नमः प्रह्वीभावं करोमीति शेषः। हे वायो ते तुभ्यं नमः नमस्करोमीति। नमो ब्रह्मणे इत्यत्र सूत्रात्मरूपेण वायोः परोक्षत्वात्संबोधनाभावः । नमस्ते वायो इत्यत्र प्राणवायुरूपेण वायोरपरोक्षत्वात्संबोधनमिति भावः ॥

तदेव स्पष्टयति—

**त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥**

**इति प्रथमोऽनुवाकः**

त्वमेव प्राणात्मको वायुरेव प्रत्यक्षं साक्षिप्रत्यक्षं ब्रह्मासि ब्रह्म भवसि बृंहणहेतुत्वाद्ब्रह्म प्राणकृतेनाशनादिना शरीरादेर्बृंहणस्य प्रसिद्धत्वात् प्राण एवात्र ब्रह्मरूपेणोक्त इत्यर्थः । त्वामेव प्राणात्मकमेव प्रत्यक्षं ब्रह्म अपरोक्षब्रह्मस्वरूपं वदिष्यामि वदामि ऋतं शास्त्रानुसारेण कर्त्तव्यतया निश्चितार्थं त्वां प्राणवाय्वात्मकं वदिष्यामि सत्यं पूर्वनिश्चितमेव वाचा उच्चार्य्यमाणं सत्यशब्दितं भवति तदपि त्वामेव वदिष्यामीति पूर्ववत् । तत् सूत्रात्मकं समष्टिरूपं प्राणात्मकं व्यष्टिरूपं ब्रह्मशब्दितं मां शिष्यं अवतु विद्याग्रहणशक्तिप्रदानेन पालयतु । तत् उक्तलक्षणं ब्रह्म वक्तारं उपदेष्टारमाचार्य्यं अवतु वक्तृत्वसामर्थ्यप्रदानेन पालयतु । एवं साधनकाले शिष्याचार्य्ययोः श्रोतृत्ववक्तृत्वशक्तिप्रदानविषयां प्रार्थनामभिधाय फलकाले फलसिद्ध्यर्थं पुनः प्रार्थ्यते—अवतु मां अवतु वक्तारं । तत्र शिष्यस्याविद्यातत्कार्य्यनिवृत्तिः फलं आचार्य्यस्य तु तादृशशिष्यप्रदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तपरितोषः फलम् । शांतिरिति त्रिर्वचनं तु आध्यात्मिकादित्रिविधविघ्नप्रशमनार्थं तत्र ज्वरादय आध्यात्मिकाः चौरव्याघ्राद्युपद्रवा आधिभौतिकाः यक्षराक्षसाद्युपद्रवा आधिदैविका इति विभागः ॥ ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

एवं प्रथमानुवाकोक्तमंत्रजपेन परिहृतविघ्नस्य पुरुषस्याध्ययनकाले स्वरादिष्वौदासीन्यनिवृत्त्यर्थं शिक्षामाह—

**ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः मात्रा बलं साम संतानः इत्युक्तः शीक्षाध्यायः ॥ २ ॥**

शिक्षैव शीक्षा दैर्घ्यं च्छान्दसं शिक्षा शिक्ष्यतेऽनयेति शिक्षा वर्णाद्युच्चारणलक्षणं शिक्ष्यते वेदनीयत्वेनोपदिश्यत इति वा शिक्षा तां शीक्षां व्याख्यास्यामः विस्पष्टमासमन्तात्कथयिष्यामः । तत्र वर्णोऽकारादिः । स्वरः उदात्तोऽनुदात्तः स्वरितसंज्ञकश्च । मात्रा ह्रस्वदीर्घप्लुतरूपा । बलं स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतादिरूपः प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं । समतेति साम अतिद्रुतमतिविलंबं च परिहृत्य यस्य यावदुच्चारणकालस्तावति काले तस्योच्चारणरूपमिति वा साम । सामगीतिविशेष इति वा साम । जैमिनिनाप्युक्तं गीतिषु सामाख्येति । संतानः वर्णयोरव्यवधानं । तथा च वर्णादयः संतानांताः षट् इति एतावान् शीक्षाध्यायः शीक्षा यस्मिन्नध्याये सोऽयं शीक्षाऽध्यायः उक्तः कथितः । नातोऽधिकं वेदोच्चारणे शिक्षणीयमस्तीत्यर्थः ॥ द्वितीयोऽनुवाकः ॥ २ ॥

पूर्वोक्तशांतिमंत्रेण विघ्नोपशमः प्रार्थितः । इदानीं विद्यातत्फलोत्कर्षः शिष्येण प्रार्थ्यते—

**सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् ॥**

नौ आवयोः शिष्याचार्य्ययोः सह युगपदेव यशः वक्ष्यमाणोपासनानिमित्तककीर्त्तिरस्त्विति शेषः । नौ आवयोः सह युगपदेव ब्रह्मवर्चसं उपनिषत्परिज्ञाननिमित्तकं मुखकांत्यादिरूपतेजोऽस्त्विति शिष्यवचनमाशीर्वाद इत्यर्थः । इदानीं संहिताविषयकोपासनमाह—**अथेति** । अथ वर्णस्वराद्युच्चारणाभ्यासानंतरं अतः चित्तैकाग्रताहेतुत्वात् संहितायाः वर्णानामत्यंतसामीप्यं संहिता । तथा च पाणिनिना सूत्रितं 'परः सन्निकर्षः संहिता' इति । तस्याः उपनिषदं

तद्विषयकोपासनं व्याख्यास्यामः निरूपयिष्यामः । पंचस्वधिकरणेषु पंचस्विति सप्तमी तृतीयार्थे विपरिणेया अधिकरणशब्दश्च विषयपर्य्यायः । तथा च विष्णुप्रतिमायां दर्शनमिव पंचभिः पदार्थैर्विशेषितं ज्ञानं संहितावर्णेषु कर्त्तव्यमित्यर्थः । के ते पञ्च विषया इत्यत आह अधिलोकमिति । अधिलोकं लोकान्पृथिव्यादीनधिकृत्य ध्येयत्वेनोपादाय वर्त्तमानं दर्शनमित्यधिलोकं । अधिज्यौतिषं ज्योतिरात्मकाग्न्यादीन् ध्येयत्वेनोपादाय वर्त्तमानं । अधिविद्यं विद्याशब्देनाचार्यादयो जहल्लक्षणया ग्रहीतव्याः । तथा चाचार्य्यादीन् ध्येयत्वेनोपादाय वर्तमानं । अधिप्रजं अत्र संततिवाचकप्रजाशब्देनाजहल्लक्षणया मात्राद्या अपि ग्राह्याः । तथा च मात्रादीन् ध्येयत्वेनोपादाय क्रियमाणं । अध्यात्मं आत्मा देहस्तदवयवविषयमुपासनम् । ताः उक्तलक्षणा अधिलोकादिरूपा उपासनाः पञ्चविषयाः ॥

**महासꣳहिता इत्याचक्षते । अथाधिलोकं । पृथिवी पूर्वरूपं । द्यौरुत्तररूपं । आकाशः संधिः । वायुः संधानं । इत्यधिलोकं ॥ १ ॥**

महत्यश्च ताः संहिताश्चेति महासंहिताः महोपनिषदः इति एवं आचक्षते कथयंति वेदविद इति शेषः । संहितायां महत्त्वं बहुत्त्वं च लोकादिविषयाणां महत्त्वाद्बहुत्वाच्चेति बोध्यम् । ता एव दर्शयति अथेति । अथाधिलोकमथाधिज्यौतिषमित्यादिपञ्चपर्य्यायस्था अथशब्दाः उपासनक्रमविवक्षार्थाः । प्रथमावयवमाह अथाधिलोकं । उपासनमुच्यते इति शेषः । एवं सर्वत्र योज्यं । पृथिवी पूर्वरूपं पठ्यमानवर्णानामतिशयेन सन्निधिरूपसंहितायाः पूर्वरूपं पूर्वो वर्णः पृथिवी । तथा च संहितायाः पूर्ववर्णे पृथिवी दृष्टिः कर्तव्या । केचित्तु पृथिव्यादिशब्दैः पृथिव्याद्यभिमानिन्यो देवता ग्राह्याः । अन्यस्योपास्यत्वासंभवादित्याहुः । द्यौरुत्तररूपं उत्तररूपं संहिताया उत्तरवर्णः द्यौः स्वर्गः । तथा च संहिताया उत्तरवर्णे स्वर्गलोकदृष्टिः कर्तव्या । आकाशः संधिः संधीयेते संबध्येते पूर्वोत्तररूपे यस्मिन्सः संधिः पूर्वोत्तरवर्णयोर्मध्यदेशः आकाशः अंतरिक्षलोकः । तथा चोक्तसंधौ अंतरिक्षलोकदृष्टिः कर्त्तव्या । वायुः संधानं संधीयेते पूर्वोत्तरवर्णावनेनेति संधानं संहितारूपं तत्र वायुदृष्टिः कर्त्तव्या । इति इत्याकारकं अधिलोकं लोकविषयकमुपासनमुक्तमिति शेषः ॥ १ ॥

द्वितीयावयवमाह—

**अथाधिज्यौतिषम्। अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपः संधिः। वैद्युतः संधानम्। इत्यधिज्यौतिषम्॥ २॥**

अथाधिज्यौतिषं ज्योतिर्विषयकमुपासनमुच्यते। अग्निः पूर्वरूपं। पूर्वरूपं पूर्ववर्णः अग्निः तथा च संहितायाः पूर्ववर्णेऽग्निदृष्टिः कर्त्तव्या। आदित्य उत्तर-रूपं उत्तररूपं उत्तरवर्ण आदित्यः तथा च संहिताया उत्तरवर्णे आदित्यदृष्टिः कर्त्तव्या। आपः संधिः आपः जलानि संधिः पूर्वोक्तसंधौ जलदृष्टिः कर्त्तव्या। वैद्युतः विद्युदेव वैद्युतः स्वार्थे तद्धितः संधानं संहितारूपं तत्र वैद्युतदृष्टिः क-र्त्तव्या। इति इत्याकारकं अधिज्यौतिषं ज्योतिर्विषयकोपासनमुक्तमिति शेषः॥२॥

तृतीयावयवमाह—

**अथाधिविद्यम्। आचार्य्यः पूर्वरूपं। अंतेवास्यु-त्तररूपं। विद्या संधिः। प्रवचनꣳ संधानम्। इत्य-धिविद्यं॥ ३॥**

अथाधिविद्यं विद्याविषयकमुपासनमुच्यत इति शेषः। आचार्य्यः पूर्वरूपं पूर्वरूपं पूर्ववर्णः आचार्य्यः तथा च संहितायाः पूर्ववर्णे आचार्य्यदृष्टिः कर्त्तव्या। अंतेवास्युत्तररूपं उत्तररूपं उत्तरवर्णः अंतेवासी शिष्यः तथा च संहिताया उत्तरवर्णे शिष्यदृष्टिः कर्तव्या। विद्या संधिः विद्याप्रतिपादको ग्रंथः संधिः पूर्वो-क्तसंधौ विद्यादृष्टिः कर्त्तव्या। प्रवचनं ग्रंथाध्ययनं संधानं संहितारूपं तथा च पूर्वोक्तसंधाने प्रवचनदृष्टिः कर्त्तव्या। इति इत्याकारकं अधिविद्यं विद्याविषय-कमुपासनमुक्तमिति शेषः॥ ३॥

चतुर्थावयवमाह—

**अथाधिप्रजं। माता पूर्वरूपं। पितोत्तररूपं। प्रजा संधिः। प्रजननꣳ संधानं। इत्यधिप्रजं॥ ४॥**

अथाधिप्रजं प्रजाविषयकमुपासनमुच्यत इति शेषः। माता पूर्वरूपं पूर्वरूपं पूर्वो वर्णः माता जनयित्री तथा च संहितायाः पूर्ववर्णे मातृदृष्टिः कर्त्तव्या। पितोत्तररूपं उत्तररूपं उत्तरवर्णः पिता जनयिता तथा च संहिताया उत्तरवर्णे

पितृदृष्टिः कर्त्तव्या। प्रजा संधिः प्रजा पुत्रपौत्रादिरूपा संततिः संधिः पूर्वोक्तसंधौ प्रजादृष्टिः कर्तव्या। प्रजननं प्रजाया उत्पत्तिः संधानं संहितारूपं तथा च पूर्वोक्तसंधाने प्रजननदृष्टिः कर्त्तव्या। इति इत्याकारकं अधिप्रजं प्रजाविषयकमुपासनमुक्तमिति शेषः ॥ ४ ॥

पंचमावयवमाह—

**अथाध्यात्मं। अधराहनुः पूर्वरूपम्। उत्तराहनुरुत्तररूपं। वाक् संधिः। जिह्वा संधानं। इत्यध्यात्मं ॥ ५ ॥**

आत्मानमधिकृत्य वर्तत इत्यध्यात्मं अत्रात्मशब्देनायं संघातो विवक्षितः तथा च संघातविषयकमुपासनमुच्यत इति शेषः। अधराहनुः पूर्वरूपं पूर्वरूपं पूर्वो वर्णः अधराहनुः तथा च संहितायाः पूर्ववर्णेऽधराहनुदृष्टिः कर्त्तव्या। उत्तराहनुरुत्तररूपं उत्तररूपं उत्तरवर्णः उत्तराहनुः तथा च संहिताया उत्तरवर्णे उत्तराहनुदृष्टिः कर्तव्या। वाक् संधिः वाक्शब्देन कंठताल्वादिस्थानगतवागिंद्रियमुच्यते संधिः पूर्वोक्तसंधौ वाक्दृष्टिः कर्तव्या। जिह्वा संधानं संधानं संहितारूपं तथा च पूर्वोक्तसंधाने जिह्वादृष्टिः कर्त्तव्या। इति इत्याकारकं अध्यात्मं संघातविषयकमुपासनमुक्तमिति शेषः ॥ ५ ॥

प्रतिपादितरूपान्संहितावयवानुपसंहरति—

**इतीमा महासꣳहिताः। य एवमेता महासꣳहिता व्याख्याता वेद। संधीयते प्रजया पशुभिः। ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ६ ॥**

इति उक्तलक्षणा इमा अधिलोकादिरूपाः महासंहिताः महत्य उपासना उक्ताः। फलसाधनत्वविशिष्टोपासनं विधत्ते। यः कोप्यधिकारी एता अधिलोकादिरूपा महासंहिता व्याख्याताः श्रुत्या निरूपिताः एवं उक्तया लोकादिदृष्ट्या वेद उपास्ते सः प्रजया पुत्रपौत्रादिरूपया पशुभिः गवादिलक्षणैः ब्रह्मवर्चसेन ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसं तेन अन्नाद्येन अदनीयान्नेन सुवर्ग्येण लोकेन स्वर्गाख्यभोगभूमिरूपेण संधीयते संबध्यत इत्यर्थः। अत्र सकामेन क्रियमाणं संहितोपासनं कामितफलाय भवति।

निष्कामेन क्रियमाणं ब्रह्मविद्यासाधनं भवतीति ब्रह्मविद्यासन्निहिताऽऽम्नान-सामर्थ्यात्कल्प्यत इति भावः ॥ ६ ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

इदानीं मेधारहितस्य श्रुतग्रंथार्थविस्मृतौ ब्रह्मविद्योदयासंभवान्मेधासि-द्ध्यर्थं प्रणवजपमंत्रानाह—

**यश्छंदसामृषभो विश्वरूपः । छंदोभ्योऽध्यमृता-त्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिव्हा मे मधुमत्तमा कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥ १ ॥**

प्रणवः छंदोभ्यो वेदेभ्यो अमृतादिति वेदविशेषणं वेदा ह्यमृता इति श्रुत्यंतरात् एकवचनं छादसं तथा च अमृतेभ्यो नित्येभ्यो अधि अधिकः संबभूव अभवत् सः ॐकारः मा मामुपासकं मेधया प्रज्ञया स्पृणोतु प्रीणयतु प्रज्ञाबलं हि प्रार्थ्यत इति यावत् । यद्वा नायमात्मा बलहीनेन लभ्य इति श्रुत्यंतरात् बलवंतं करोत्वित्यन्वयः । वेदानां नित्यत्वं चावांतरप्रलये नाशा-भावरूपं विवक्षितं नत्वात्यंतिकं नित्यत्वं कल्पादौ सृष्टिश्रवणात् महाप्रलये नाशाभ्युपगमाच्च । उक्तं ओंकारं विशिनष्टि छंदसामिति । यः प्रणवो गाय-त्र्यादिछंदोयुक्तवेदानां मध्ये ऋषभः श्रेष्ठः स च प्रणवो विश्वरूपः सर्वज-गदात्मकः प्रणवस्य प्रथमावयवेऽकारे सर्ववाचामंतर्भावात् अकारो वै सर्व-वागिति श्रुतेः वाचि च वाच्यानामंतर्भावात्सर्वात्मक इत्यर्थः । पुनः कीदृश ओंकारः इंद्रः सर्वकामेशः परमेश्वरः । देव हे दीप्तिमन् प्रणव अमृतस्य अमृ-ताख्यमोक्षसाधनभूतज्ञानस्य धारणः धारकः भूयासं अहं भूयेयं । मेधाहेतुमं-त्रमुक्त्वा रोगादिराहित्यहेतुमंत्रमाह—**शरीरमिति** । मे मम शरीरं विचर्षणं रोगरहितं भूयादिति शेषः मे मम जिह्वा वागिंद्रियरूपा मधुमत्तमा मधुम-त्यतिशयेन मधुरभाषिणी भूयात् कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं अडभावश्छांदसः व्यश्रुवं झटिति श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्य्यकरणसंघातोऽस्त्विति वाक्यार्थः । नन्वचेतनं शब्दात्मकं प्रणवं प्रति प्रा-र्थना कथं घटते कथं चेन्द्रशब्देन तस्याभिधानमित्याशंक्य तस्य ब्रह्माभेद-

विवक्षया प्रार्थनादिकमित्यभिप्रेत्याह ब्रह्मण इति । ब्रह्मणः परमात्मनः कोशोऽसि असेः कोशवदुपलब्धिस्थानमसि ब्रह्मदृष्ट्याऽऽलंबनोसीत्यर्थः । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः सामान्यप्रज्ञैरविदितोसीत्यर्थः । मे मम श्रुतं श्रवणपूर्वकमधीतं गोपाय विस्मृत्यादिनिवारणेन पालयेत्यर्थः ॥ १ ॥

एते व्याख्याता जपमंत्रा मेधाकामस्य । इदानीमन्नादिश्रीसिद्धये होमांगभूतान्मंत्रानाह—

**आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः ।**
**वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा ।**
**ततो मे श्रियमावह । लोमशां पशुभिः सह**
**स्वाहा । आ मायन्तु ब्रह्मचारिणः स्वाहा । वि मा-**
**यन्तु ब्रह्मचारिणः स्वाहा । प्र मायन्तु ब्रह्मचा-**
**रिणः स्वाहा । द मायन्तु ब्रह्मचारिणः स्वाहा ।**
**श मायन्तु ब्रह्मचारिणः स्वाहा ॥ २ ॥**

यत आत्मनो ममोपासकस्य वासांसि वस्त्राणि गावश्च गाश्च अन्नपाने च अन्नं व्रीहियवादिलक्षणं पानं जलपयआदिरूपं एतानि सर्वदा सर्वस्मिन्काले आवहंती प्रापयंती प्राप्तानि च वितन्वाना विस्तारयंती चीरं छांदसो दीर्घः चिरकालं कुर्वाणा एतान् जनयंती या श्रीः तां श्रियं विभूतिं ततः मेधाजननानंतरं मे मम हे प्रणवाख्येश्वर आवह आनय आवहेत्यत्र प्रकरणादोंकार एव कर्तृत्वेन संबध्यते । किंविशिष्टां श्रियं लोमशां लोमवतीं अजाऽव्यादिरूपां पशुभिः सह अन्यैश्च पशुभिः सह युक्तां च । स्वाहापदं तस्मै श्रीप्रदायेदं हुतमस्त्विति हवनीयद्रव्यप्रक्षेपार्थम् । इदानीं विद्यासंप्रदायप्रवृत्त्यर्थं शिष्यसंपादकहोमार्थान् पंच मंत्रानाह—**आ मायंत्विति** । मा मां मत्समीपं ब्रह्मचारिणः शिष्याः आयंतु आगच्छंतु । वि मायंतु मा मां व्यायंतु विविधकामनावंतः संतः आयंतु आगच्छंतु । प्र मायंतु मा मां प्रायंतु प्रज्ञाऽतिशयेन प्रकृष्टाः संतः आयंतु । द मायंतु देत्यव्ययेन दम उच्यते तथा च मा मां प्रति दांताः संतः आयंतु । श मायंतु शेत्यव्ययेन शम उच्यते शमशब्दः शान्तिपरः क्रोधादिचित्तदोषराहित्यं शान्तिः तथा च मा मांप्रति शान्ताः सन्तः आयन्तु ॥ २ ॥

कीर्तिप्रदौ मंत्रावाह—

**यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा। तस्मिन् सहस्रशाखे नि भगाऽहं त्वयि मृजे स्वाहा॥ ३॥**

जने सर्वेषु जनेषु मध्ये यशः यशस्वी विद्यासंप्रदायजनितकीर्तिमानिति यावत् असानि अहंभवानि। वस्यसः वसु धनं तदस्यास्तीति वसुमान् अतिशयेन वसुमान् वसीयान् वसुमच्छब्दादीयसुन्प्रत्ययः विन्मतोर्लुगिति मतुब्लोपः छान्दस ईयसुन ईकारलोपश्च तस्माद्वस्यसः धनवत्तरात्पुरुषात् श्रेयान् प्रशस्यतरः असानि भवानि। यशस्वित्वश्रेयस्त्वहेतुप्रतिपादकान् त्रीन्मंत्रानाह—**तमिति**। भगशब्द ऐश्वर्य्यादिषड्गुणवाचकः 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना' इति स्मरणात् भगशब्देन तद्वानुपलक्ष्यते हे भगवन्परमेश्वर तं भगवंतं कोशभूतं त्वा त्वां प्रणवाख्यं प्रविशानि त्वदात्मैव भवानीत्यर्थः। सः प्रणवाख्यस्त्वं मा मामुपासकं भग हे भगवन् प्रविश आवयोरेकत्वमेवास्त्वित्यर्थः। भग हे भगवन् तस्मिन् प्रकृते त्वयि प्रणवाख्ये सहस्रशाखे अनेकमूर्तिभेदयुक्ते अहं उपासकः निमृजे नितरां शोधयामि पापमपनयामीत्यर्थः॥ ३॥

यत्पूर्वमुक्तं ब्रह्मचारिणो मामायंत्विति तत्र दृष्टांतमाह—

**यथाऽऽपः प्रवता यंति। यथा मासा अहर्जरं। एवं मां ब्रह्मचारिणः। धातरायंतु सर्वतः स्वाहा। प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व॥ ४॥**

यथा येन प्रकारेण आपः जलानि प्रवता प्रवणता निम्नदेशमार्गेण यंति गच्छंति यथा येन प्रकारेण मासाः वैशाखादयो द्वादश अहर्जरं अहोभिः परिवर्तमानो लोकान् जरयतीत्यहर्जरः संवत्सरः तं यद्वा अहानि त्रिशतषष्टिसंख्यानि जीर्यंति अंतर्भवंति यस्मिन्सोऽहर्जरः तं यंति। हे प्रणव धातः सर्वस्य जगतो विधातस्त्वं एवं तथा मामाचार्य्यं ब्रह्मचारिणः शिष्याः सर्वतः सर्वदिग्भ्यः आयंतु आगच्छंतु प्रतिवेशोऽसि श्रमापनयनगृहं त्वं भवसि अतः

मा मां प्रभाहि आचार्य्यत्वेन प्रख्यातं कुरु तदर्थं मा मां प्रपद्यस्व अनुगृहाणेत्यर्थः । काम्यानामप्येषां पापनिवृत्तिद्वारा ब्रह्मविद्यायामुपयोगित्वान्न ज्ञानप्रकरणविरोधः । तथा चोक्तं ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण इति । चतुर्थोऽनुवाकः ॥ ४ ॥

तृतीयानुवाके संहिताविषयमुपासनमुक्तं चतुर्थानुवाके मेधाश्रियोः सिद्ध्यर्थं मंत्रा उक्ताः इदानीं पञ्चमे षष्ठेऽनुवाके प्राधान्येनोपास्यतया वक्षमाणस्य हार्दाकाशस्थब्रह्मणो या अंगदेवतास्तासामुपासनं वक्तुमादौ तत्प्रतीकभूतं व्याहृतित्रयं दर्शयति—

**भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मै तां चतुर्थीं माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अंगान्यन्या देवताः ॥**

भूर्भुवः सुवः इति इत्याकारिकाः वै प्रसिद्धाः एताः प्रदर्शिता भूरादिरूपाः तिस्रः त्रिसंख्याकाः व्याहृतयः व्याहरणमुच्चारणं तद्विषयत्वान्मंत्राणां व्याहृतिशब्दवाच्यत्वं । तासां भूरादीनां तिसृणां व्याहृतीनां एतां वक्ष्यमाणां चतुर्थीं चतुःसंख्यापूरिकां व्याहृतिं माहाचमस्यः महान्सोमपानार्थश्चमसः पात्रविशेष उच्यते बहुषु सोमयागेषु वर्तमानत्वात् यद्वा महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेदिति वार्तिककृदुक्तेः तथा च महाचमसस्य गोत्रापत्यं माहाचमस्य आचार्य्यः प्रवेदयते प्रकर्षेण विदितवान् ददर्शेत्यर्थः । माहाचमस्यग्रहणमृष्यनुसरणार्थं ऋष्यनुस्मरणस्याप्युपासनांगत्वात् । उ ह स्मा इति निपातत्रयं उक्तसमुदायप्रसिद्ध्यर्थं । का सा चतुर्थी व्याहृतिरित्यत आह—**मह इति** । महः इत्याकारिकेत्यर्थः तद्ब्रह्म सः ब्रह्मवस्त्विति चिंतयेत् ब्रह्मत्वादेव चतुर्थव्याहृतिरूपः सोऽयं शरीरमध्येऽवस्थित आत्मा । यद्वा ब्रह्म हिरण्यगर्भाख्यं तदिति विधेयापेक्षया नपुंसकनिर्देशः । एवं स इत्यत्रापि बोध्यं । मह इति व्याहृतावंगिब्रह्मदृष्टिः कर्तव्या । सः महोव्याहृतिः आत्मा हिरण्यगर्भाख्यब्रह्मणो मध्यभाग आत्मेति कल्प्यते । व्याप्नोतीत्यात्मा व्याप्यंते हि मह इत्यनेन वक्ष्यमाणादित्यचंद्रब्रह्मान्नभूतेन इतराश्च व्याहृतयो लोका देवा

वेदाः प्राणाश्च अतोऽन्याः महोव्याहृतितो भिन्नाः देवताः देवता इति ग्रहणं लोकादीनामप्युपलक्षणं तथा च देवता लोका वेदाः प्राणाश्च अंगानि मह इति व्याहृत्यात्मनो हिरण्यगर्भस्य पादाद्यवयवा इति कल्प्यन्ते ॥

उक्तासु चतसृषु व्याहृतिषु क्रमेण लोकदेववेदप्राणानां दृष्टिं विधत्ते—

**भूरिति वा अयं लोकः । भुव इत्यंतरिक्षं । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते ॥ १ ॥**

भूरिति भूः इत्याकारिका व्याहृतिः वै प्रसिद्धः अयं लोकः प्रत्यक्षगोचरः पृथिवीलोकः । भुव इति भुव इत्याकारिका व्याहृतिः अंतरिक्षं अंतरिक्षलोकः । सुवरिति सुव इत्याकारिका व्याहृतिः असौ लोकः शास्त्रप्रसिद्धो द्युलोकः । मह इति मह इत्याकारिका व्याहृतिः आदित्यः सूर्य्यः आदित्येन वाव प्रसिद्धेन सर्वे लोकाः पृथिवीलोकांतरिक्षलोकद्युलोकाः प्रकाशिताः संतः महीयंते प्राणिनां व्यवहारक्षमत्वलक्षणां वृद्धिं प्राप्नुवंति तस्मान्मह इति व्याहृतेरादित्यरूपत्वं युक्तं ॥ १ ॥

तास्वेव व्याहृतिषु देवविशेषदृष्टिं विधत्ते—

**भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते ॥ २ ॥**

भूः इति इत्याकारिका व्याहृतिः वै प्रसिद्धः अग्निः इयमग्निर्देवता । भुव इति भुव इत्याकारिका व्याहृतिः वायुः अंतरिक्षेस्थितः वायुर्देवता । सुवरिति सुव इत्याकारिका व्याहृतिरादित्यः सर्वलोकप्रकाशकसूर्य्यदेवता । महरिति मह इत्याकारिका व्याहृतिः चन्द्रमाः चन्द्रदेवता चन्द्रमसा चन्द्रेण सर्वाणि ज्योतींषि अग्निवाय्वादित्यदेवतारूपाणि निखिलानि महीयंते वर्द्धंते । वायौ ज्योतिःशब्दप्रयोगस्त्वजहल्लक्षणया बोध्यः । वावशब्देन चन्द्रकलापानेन तेषां वृद्धिः 'प्रथमां पिबते वह्निः' इत्यादिशास्त्रप्रसिद्धेति स्मारयते ॥ २ ॥

तास्वेव व्याहृतिषु वेददृष्टिं विधत्ते—

**भूरिति वा ऋचः । भुव इति सामानि । सुव-**

**रिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयंते ॥ ३ ॥**

भूरित्याकारिका व्याहृतिः वै प्रसिद्धा ऋचः ऋग्वेदीयाः पादबद्धमंत्राः । भुव इति भुव इत्याकारिका व्याहृतिः सामानि सामवेदीयगीतिसहिता ऋचः । सुवरिति सुव इत्याकारिका व्याहृतिः यजूंषि यजुर्वेदीया अविवक्षितच्छंदस्का मंत्राः। मह इति मह इत्याकारिका व्याहृतिः ब्रह्म प्रणवः । भूरिति वा ऋचः इत्यादिवेदावयवभूतशब्दसन्निधाने मुख्यार्थग्रहणयोगात् चतुर्थव्याहृतौ पूर्वमेव मुख्यब्रह्मदृष्टेरुक्तत्वेन पुनरुक्तिप्रसंगाच्च । ब्रह्मणा प्रणवेन वाव प्रसिद्धाः सर्वे निखिलाः वेदाः ऋगाद्यः महीयंते वर्द्धंते वेदवृद्धेः प्रणवोच्चारणपूर्वकाध्ययनाधीनत्वात् तथा चाष्टमानुवाके वक्ष्यति ओमिति ब्राह्मणः प्रवक्ष्यन्नाहेति ॥ ३ ॥

तास्वेव व्याहृतिषु प्राणादिदृष्टिं विधत्ते—

**भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नं । अन्नेन वाव सर्वे प्राणा महीयंते ॥ ४ ॥**

भूरित्याकारिका व्याहृतिः वै प्रसिद्धः प्राणः मुखनासिकाभ्यां प्राग्गमनवान् वायुः । भुव इति भुव इत्याकारिका व्याहृतिः अपानः अर्वाग्गमनवान्वायुः । सुवरिति सुव इत्याकारिका व्याहृतिः व्यानः नानाविधगतिमान् वायुः । मह इति मह इत्याकारिका व्याहृतिः अन्नं व्रीहियवादिलक्षणमन्नं अन्नेन भुक्तेनोक्तान्नेन वाव प्रसिद्धाः सर्वे प्राणाः प्राणापानव्यानरूपाः महीयंते तर्प्यंते वर्द्धंते एतत्प्रसिद्धं लोके । श्रुतिरप्याह शुष्यंति वै प्राणा ऋतेऽन्नानीति ॥ ४ ॥

यथोक्तलोकादिदृष्टिभिरुक्ता व्याहृतीरुपसंहरति—

**ता वा एताश्चतुर्द्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहंति ॥ ५ ॥ इति पञ्चमोऽनुवाकः ॥**

ताः प्रकृताः वै प्रसिद्धा एताः भूर्भुवःसुवर्महर्लक्षणाः चतस्रः चतुःसं-

ख्याकाः चतुर्द्धा एकैका चतुःप्रकारा सती चतस्रश्चतस्रो व्याहृतयः एकैका व्याहृतिर्यदा चतुःसंख्याका चतुःसंख्याका चिंत्यते तदा षोडशकलः पुरुष उपासितो भवतीति शेषः । ताः उक्तप्रकाराः व्याहृतीः योऽधिकारी वेद उपास्ते सः व्याहृत्युपासकः ब्रह्म वेद जानाति । तद्ब्रह्म स आत्मेति प्रथमपर्य्याये ब्रह्ममात्रमवगतं ननु तद्गुणजातं । स वेद ब्रह्मेति वाक्ये तु वक्ष्यमाणगुणविशिष्टत्वेन ज्ञातव्यतोच्यते तथा च वक्ष्यमाणगुणविशिष्टस्याज्ञातत्वान्न पौनरुक्त्यं । परमफलमुक्त्वा अवांतरफलमाह—**सर्वे इति** । अस्मै व्याहृत्युपासकाय सर्वे निखिलाः देवाः अंगभूता लोकाद्यभिमानिनः बलिं उपहारं आवहंति प्रापयंति उपहारसमर्पणेन पूजां कुर्वंतीत्यर्थः । न च व्याहृत्युपासकस्य ब्रह्मलोकप्राप्त्यभावेन कथं सर्वदेवपूज्यत्वमिति वाच्यं व्याहृत्युपासनब्रह्मोपासनयोरंगांगिभावेनोपासनैक्यात् वक्ष्यमाणब्रह्मोपास्त्या ब्रह्मलोकप्राप्तिसंभवेन सर्वदेवपूज्यत्वसंभवात् ॥ ५ ॥ इति पञ्चमोऽनुवाकः ।

पञ्चमानुवाकेंऽगोपासनमुक्तं षष्ठे त्वंगिब्रह्मोपासनमुच्यते तत्रादावुपास्यब्रह्मणः स्वरूपमाह—

**स य एषोंऽतर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरणमयः । अंतरेण तालुके । य एष स्तन इवावलंबते । सेन्द्रयोनिः । यत्रासौ केशांतो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ॥ १ ॥**

हृदयपुंडरीकस्य मध्ये स्वांगुष्ठपरिमित आकाशो वर्तते स एष इत्येताभ्यां दूरसामीप्यवाचिभ्यां व्यवहितयोगशास्त्रप्रसिद्धः सन्निहितश्रुत्यंतरप्रसिद्धश्चोच्यते । ईदृशः यः हृदये पुंडरीकाकारमांसपिंडे ऊर्ध्वनालेऽधोमुखे अंतः अंतर्वर्तमानः आकाशः दहराकाशः स्वांगुष्ठपरिमित आकाश इत्यर्थः । तस्मिन्नाकाशे तद्ब्रह्म स आत्मेत्यनेन पूर्वं परोक्षतयोक्तस्यात्मनः अपरोक्षवाचकायंशब्देन साक्षात्कारयोग्यताऽभिधानादयं अहंप्रत्ययगोचरः पुरुषः शरीरात्मकपुरि शयनात्पुरुषः भूरादयो लोकाः पूर्णा येनेति वा पुरुषः परमात्मा वर्तत इत्यध्याहारेण संबन्धः । यद्यप्यसौ सर्वत्र वर्तते तथापि

तस्योपलब्ध्यर्थमुपासनार्थं च हृदयस्थानमुपदिश्यते हृदयकमलमध्ये हि समाधिना निरुद्धमेकाग्रं मनः कृत्वा परमात्मानं साक्षात्कर्तुं प्रभवतीति भावः। तमेव विशिनष्टि—मनोमयः मननं मनः ज्ञानं तन्मयः ज्ञानप्रायः मनसैव जिज्ञासुभिर्ज्ञेयत्वात् ध्यायिभिश्च ध्यानाकारपरिणामिना मनसैवोपलभ्यमानत्वाच्च वा मनोमय इत्यर्थः। अमृतः नाशरहितः हिरण्मयः ज्योतिर्मयः स्वप्रकाशस्वरूप इत्यर्थः। एवमुपास्यब्रह्मस्वरूपमभिधायोपासकस्य ब्रह्मलोकगतये मार्गविशेषमाह। अंतरेण तालुके मुखबिलस्यांतर्जिह्वामूलस्योपरिस्थितौ वामदक्षिणभागौ तालुके इत्युच्येते तयोस्तालुकयोरंतरेण मध्ये स्तन इव स्तनसदृशः स्वल्पः कश्चिन् मांसखंडः अवलंबते लंबमानस्तिष्ठति संलग्नो भवतीति वा तस्य मांसखंडस्य योगशास्त्रप्रसिद्धिं द्योतयितुं यच्छब्दः। तस्यैव प्रत्यक्षतां द्योतयितुं एषशब्दः। तथा च लंबिकाकरणप्रवीणस्य जिह्वाऽग्रस्पर्शनेन प्रत्यक्षः परकीयमुखे परकीयचक्षुषैव प्रत्यक्षः स च मांसखंडः शाखाग्रचंद्रदर्शनन्यायेन स्वसमीपवर्तिनीं योगशास्त्रप्रसिद्धां सुषुम्णाख्यां नाडीमुपलक्षयति तथा च तत्समीपगा सुषुम्नाख्या नाडी। यत्र यस्मिन्मूर्द्धदेशेऽसौ सर्वजनप्रत्यक्षः केशांतः केशानामंतोऽवसानं मूलं विवर्तते विभागेन वर्तते तं मूर्द्धदेशं प्राप्यमाणा शीर्षकपाले शिरसो वामदक्षिणकपाले व्यपोह्य भित्त्वा निर्गता या सा सुषुम्नाख्या नाडी इन्द्रयोनिः इन्द्रस्य ब्रह्मणो योनिः ब्रह्मलोकप्राप्तिमार्गः स्वरूपप्रतिपत्तिद्वारमिति यावत्। तेनैव द्वारेणोर्ध्वं गच्छन्नुपासको मुच्यत इत्यर्थः। एवं ब्रह्मलोकमार्गमभिधाय यथोक्तोपासकस्य फलमाह—**भूरिति**। भूः इत्याकारकव्याहृतिरूपो योऽग्निरस्य लोकस्याधिष्ठाता तस्मिन्नग्नौ प्रतितिष्ठति व्यष्ट्यग्न्यात्मना भूर्लोकं व्याप्नोतीत्यर्थः। भुवरिति भुवः इत्याकारकद्वितीयव्याहृतिरूपवायौ प्रतितिष्ठतीत्यनुषंगः व्यष्टिवायुरूपेणांतरिक्षलोकं व्याप्य तिष्ठतीत्यर्थः॥ १॥

**सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्मप्राणा-**

**रामं मनआनंदम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्व ॥२॥ इति षष्ठोऽनुवाकः ॥६॥**

सुवः इत्याकारकतृतीयव्याहृतिरूपादित्ये प्रतितिष्ठति मह इति अंगिभूत-चतुर्थव्याहृतिरूपे ब्रह्मणि प्रतितिष्ठति तेष्वात्मभावेन स्थितो भवतीत्यर्थः । ततश्च स्वाराज्यं स्वाराड्भावं आप्नोति प्राप्नोति अंगभूतानां भूरादीनां स्वयमेव राजाऽधिपतिर्भवतीत्यर्थः । मनसस्पतिं सर्वेषां हि प्राणिनां मनसां पतित्वं आप्नोति सर्वात्मकब्रह्मस्वरूपस्य विदुषः सर्वजीवात्मकत्वात्सर्वजीवमनसाम-धिपतिर्भवति । वाक्पतिः सर्वेषां प्राणिनां वाचां पतिः नियंता भवतीति शेषः । चक्षुष्पतिः सर्वेषां प्राणिनां चक्षुरिन्द्रियाणां पतिर्भवति । श्रोत्रपतिः सर्वेषां प्राणिनां श्रोत्रेंद्रियाणां पतिर्भवति । विज्ञानपतिः सर्वप्राणिनां बुद्धीनां पतिर्भ-वति । ततः समष्टिरूपविराड्भावप्राप्त्यनंतरं उत्पन्नतत्वज्ञानः सन् एतत् वक्ष्य-माणं ब्रह्म स्वोपास्यस्वरूपं भवति । कीदृशं ब्रह्म आकाशशरीरं ब्रह्म आकाश-वन्मूर्तिरहितं शरीरं स्वप्रकाशस्वरूपं यस्य ब्रह्मणस्तदाकाशशरीरं पुनः कीदृशं सत्यात्म सत्यमबाध्यं सर्वजगत्कल्पनाधिष्ठानमात्मा स्वरूपं यस्य ब्रह्मणस्तत्स-त्यात्म पुनः कीदृशं प्राणारामं प्राणानां वागादीनां आरामं उत्पत्त्यादिस्थानं यद्वा प्राणेषु वागादिषु विषयेष्वारमणमाक्रीडा यस्य तत्प्राणारामं मनआनंदं मनस आनंदो यस्मिन्ब्रह्मणि तन्मनआनंदं शान्तिसमृद्धं शान्तिश्च तत्स-मृद्धं च शान्तिसमृद्धं शान्तिरुपशमः समृद्धं संपूर्णं ब्रह्म शान्तिस्वरूपं सर्व-द्वैतरहितमिति यावत् अमृतं अमरणधर्मि । एवं ब्रह्मस्वरूपमुक्त्वा तदुपासनं विधत्ते इतीति । इति उक्तलक्षणं ब्रह्म प्राचीनयोग्य प्राचीनैः पूर्वकांडोक्तकर्मभिः योग्य क्षीणपाप हे जीव उपास्स्व त्वं चिंतयेति श्रुतेः जीवं प्रत्युपदेशः । प्राची-नयोग्यसंज्ञकशिष्यं प्रति गुरोरुपदेशो वा । अत्र व्याहृत्युपासने प्रथमा व्याहृतिः पादौ द्वितीया बाहू तृतीया शिरः चतुर्थी हिरण्यगर्भस्य ब्रह्मणो मध्यमभाग आत्मेति कल्पना द्रष्टव्या ॥ २ ॥ इति षष्ठोऽनुवाकः ।

पूर्वमतीन्द्रियमनोमयत्वादिगुणविशिष्टब्रह्मोपासनमुक्तं ततश्च भूरित्यादि-व्याहृत्यात्मकं हिरण्यगर्भाख्यं ब्रह्मोपास्यमुक्तं इदानीं सप्तमानुवाके तु मंदा-धिकारिणं प्रति स्थूलपृथिव्यादिपांक्तस्वरूपेणोपासनमाह—

**पृथिव्यंतरिक्षं द्यौर्दिशोऽवांतरदिशः। अग्निर्वा-युरादित्यश्चंद्रमा नक्षत्राणि। आप ओषधयो वन-स्पतय आकाश आत्मा। इत्यधिभूतं। अथा-ध्यात्मं। प्राणो व्यानोऽपान उदानः समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म मांसं स्नावाऽस्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पांक्तं वा इदꣳसर्वं। पांक्तेनैव पांक्तꣳ स्पृणोतीति ॥ १ ॥**

**इति सप्तमोऽनुवाकः ॥ ७ ॥**

भूलोकः अंतरिक्षं द्यावापृथिव्योरंतरालवर्तिलोकः द्यौः द्युलोकः दिशः प्राच्यवाचीप्रतीच्युदीचीरूपाः अवांतरदिशः अग्निकोणनैर्ऋतकोणवायुकोणे-शानकोणरूपाः इत्येकं पंचकं। अग्निर्वायुरादित्यः चंद्रमा नक्षत्राणि इति द्वितीयपंचकं। आपः जलानि ओषधयः व्रीह्यादयः वनस्पतयः वृक्षादिरूपाः आकाशः भूताकाशः आत्मा विराड् इति तृतीयपंचकं। इत्यधिभूतं इति इत्याकारकं अधिभूतं पृथिव्यादिभूतमधिकृत्य वर्तत इत्यधिभूतं तथा च भूतविषयोपासनमुक्तमित्यर्थः। अधिभूतवचनमधिलोकाधिदैवतयोरप्युपलक्षणं तथा च पृथिव्यादिकमधिलोकं अग्न्यादिकमधिदैवतं अबादिकमधिभूतमिति विभागः। अन्यत्पंचकत्रयं दर्शयति अथेति। अथ अधिभूतादित्रयपंचककथ-नानंतरं अध्यात्मं आत्मानं देहादिसंघातमधिकृत्य वर्तमानमुच्यते देहमध्य-वर्तिन एकस्यैव वायोः प्राणादीन् पंचवृत्तिभेदान् दर्शयति—**प्राण इति।** तेषां च स्थानान्युक्तानि 'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कंठदेशे स्याद्व्यानः सर्वशरीरगः' इति। तथा च प्राणादिवायुपंचकं चक्षुरादि-त्वगंतमिन्द्रियपंचकं चर्मादिधातुपंचकं स्नावशब्देन नाड्य अभिधीयंते मज्जा अस्थ्यंतर्गतधातुः ऋषिरतींद्रियस्य वेदार्थस्य द्रष्टा कश्चिन्मुनिः एतत् उक्तं पृथिव्यादिपंचकषट्कं अधिविधाय परिकल्प्य अवोचत् उक्तवान् किमुक्तवानि-त्यत आह—**पांक्तमिति।** वै प्रसिद्धं इदं उक्तपृथिव्यादिपंचकषट्कोपलक्षितं सर्वं निखिलं जगत् पांक्तं पंक्तिछंदस इदं संबंधीति पांक्तं संख्यासामान्यात् पंचाक्षरपादा पंक्तिः। तथा च सूत्रं 'अक्षरपंक्तिः पंचकाश्चत्वारः' इति पंचाक्षरै-

श्चतुर्भिश्च पादैरुपलक्षिता अक्षरपंक्तिर्नाम छन्दो भवतीति सूत्रार्थः। तथा च पंचत्वसंख्यासाम्यात् पृथिव्यादि लोकपांक्तं ॥१॥ अग्न्यादि दैवपांक्तं ॥२॥ अबादि भूतपांक्तं ॥ ३ ॥ प्राणादि वायुपांक्तं ॥ ४ ॥ चक्षुरादींद्रियपांक्तं ॥ ५ ॥ चर्मादि धातुपांक्तं ॥ ६ ॥ तच्च पांक्तात्मकजगद्विशिष्टं ब्रह्म ध्येयमिति तात्पर्य्यं एवं पांक्तेन पृथिव्यादिलोकादिषु पांक्तोपासनेन पांक्तं विराडभिमानि प्रजापतिं स्पृणोति प्राप्नोति। इतिशब्दः पांक्तोपास्तिसमाप्त्यर्थः ॥ १ ॥ इति सप्तमोऽनुवाकः॥

पूर्वं षष्ठेऽनुवाके किञ्चित्सूक्ष्मदर्शिनो मध्यमस्य मनआद्युपाधिकब्रह्मोपासनमुक्तं सप्तमे स्थूलदर्शिनो मंदस्य पृथिव्याद्युपाधिकब्रह्मोपासनमुक्तं इदानीमुत्तमाधिकारिणं प्रति सर्वोपासनानां सर्वकर्मणां चांगभूत ओंकारे ब्रह्मदृष्टिर्विधित्स्यते—

**ओमिति ब्रह्म। ओमितीद सर्वं। ओमित्येतदनुकृतिर्ह स्म वा अप्योश्रावयेत्याश्रावयंति। ओमिति सामानि गायंति। ओंशोमिति शस्त्राणि शंसंति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति ॥ १ ॥ इति अष्टमोऽनुवाकः ॥ ८ ॥**

ओंकारः परमात्मनो वाचकः ओं इत्याकारकमक्षरं ब्रह्म परापरब्रह्मस्वरूपमिति ध्यायेत् ओं इत्याकारकमक्षरं इदं विविधप्रतीतिगोचरं सर्वं चराचररूपं निखिलं जगदस्तीति शेषः। सर्वं हि शब्दजातमोंकारेण व्याप्तं अभिधेयस्य चाभिधानाधीनसिद्धिकत्वादभिधेयस्याभिधानेऽतर्भावः संभवतीति ओंकारस्य सर्वात्मकत्वमिति भावः। ओंकारं स्तुवन्नोमः सर्वसंबंधं केषुचिद्वैदिकव्यवहारेषूदाहृत्य दर्शयति—ओमित्येतत् ओं इत्याकारकमक्षरं एतदनुकृतिः अनुज्ञा ह स्म वा इति त्रयो निपाताः प्रसिद्धिद्योतकाः प्रसिद्धं हि लोके यथा केनचित्करोमीत्युक्तेऽन्य ओमित्यनुज्ञां करोति। अप्योश्रावय अपिशब्दो वक्ष्यमाणोदाहरणसमुच्चयार्थः। ओकारोऽग्नीध्रसंबोधनार्थः तथा चोक्तं वेदभाष्ये मंत्रगत ओ-

कारोऽग्नीध्रसंबोधनार्थ इति । हे आग्नीध्र देवान्प्रति हविःप्रदानावसरे श्रावय अस्मभ्यं श्रवणं कारयेति मंत्रार्थः। इति एवमुक्ते सति आश्रावयंति प्रत्याश्रवणं कारयंति तथा ओमिति ओं इत्याकारकमक्षरमुच्चार्य सामानि गीतिविशिष्टा ऋचः गायंति सामगा उद्गातार इति शेषः । बह्वृचा होतारोपि वयं किं शंसनं कुर्म इत्यर्थकं शोंसावो३मिति मंत्ररूपशस्त्राणि गीतिरहिता ऋचः शंसंति पठंति तद्यथा शोंसावो ३ मिति प्रातःसवने अध्वर्यो शोंसावो३मिति माध्यंदिनसवने अध्वर्यो शोंसावो३मिति तृतीयसवने अध्वर्युः यजुःकर्मकर्त्ता ओमिति प्रणवमुच्चार्य्य प्रतिगरं ओथामोद इवेति मंत्रं प्रतिगृणाति प्रयुंक्ते ओकारेण होता संबोध्यते हे होतः अथ अर्धर्चःशंसनानंतरं आमोद इव अस्माकं हर्ष इव संपन्न इति मंत्रार्थः। ओमिति ओं इत्याकारकं प्रणवमुच्चार्य्य ब्रह्मा ऋत्विग्विशेषः प्रसौति प्रसवकर्म करोति सर्वकर्मणामनुज्ञादानं प्रसवकर्म यथा प्रोक्षेत्येवं प्रोक्षणे प्रेरयति अग्निहोत्रं अहं जुहोमीत्युक्ते सति ओमिति ओमित्युच्चारणेन अनुजानाति अग्निहोत्रकरणानुज्ञां प्रयच्छतीत्यर्थः । ब्राह्मणः द्विजः प्रवक्ष्यन् अध्ययनं करिष्यन् ओमिति प्रणवं आह अध्ययनादौ वक्तीत्यर्थः। ब्रह्मोपाप्नवानि अहं ब्रह्म प्राप्नोमीति एवं यः कामयते सोपि तदुपासनेन ब्रह्म परमपरं वा उपाप्नोत्येव प्राप्नोत्येव तस्मादोंकारं ब्रह्मेत्युपासीतेति वाक्यार्थः । यद्यपि ओश्रावयेत्यादिमंत्रे ओथामोद इवेति प्रतिगरमंत्रे च मकारो नास्ति तथापि ओंकारैकदेशत्वादोंकार एवेति बोध्यं ॥ १ ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

पूर्वोक्तोपासकेन ऋतादिकर्मापि कर्तव्यमित्याह—

**ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वा-**

**ध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः॥ इति नवमोऽनुवाकः॥ ९॥**

ऋतं शास्त्रानुसारेण कर्तव्यतया निश्चितार्थः। स्वाध्यायः अधीतस्य वेदस्य प्रत्यहं यथाशक्ति पाठः। प्रवचनं तस्य व्याख्यानं अध्यापनं वा उक्तऋतादीनि अनुष्ठेयानीति वाक्यशेषः। सत्यं पूर्वं शास्त्रतो निश्चितमेव वाचोच्चार्य्यमाणं अनुष्ठेयं च स्वाध्यायप्रवचने च अनुष्ठातव्ये एवमग्रेपि व्याख्येयं। तपः कृच्छ्रचांद्रायणादि भोगत्यागरूपं वा तपोऽनुष्ठेयं अग्निहोत्रादीनां शमादीनां च परस्परविरुद्धानां वैकल्पिकत्वेपि स्वाध्यायप्रवचनयोरत्यंतोपकारकत्वेनावश्यानुष्ठेयत्वप्रदर्शनार्थं तयोः प्रत्येकमभ्यासः। दमः बाह्यचक्षुरादींद्रियाणां निषिद्धविषयेभ्यो निवर्तनं। शमः मनसो निषिद्धानुचिंतनान्निवर्तनं। अग्नयः गार्हपत्याहवनीयादयः आधानादिसंस्कारेण निष्पन्ना इति शेषः। अग्निहोत्रं आहिताग्नौ सायंप्रातश्च हवनं कर्तव्यमिति शेषः। अतिथयः ब्राह्मणादयः यदा कदाचित् याजनार्थं गृहे समागताः। पूजनीयाः। मानुषं शिष्टाचारप्राप्तत्वाच्छ्रौतस्मार्तवत् विवाहाद्युत्सवेषु क्रियमाणं वध्वादिपूजनं प्रजापुत्रोत्पत्तिविषया गर्भाधानादिसंस्काराः प्रजनः पुत्रोत्पत्त्यर्थं ऋतुकाले भार्यागमनं प्रजातिः श्रुतिस्मृत्युदितं स्ववर्णाश्रमानुसारेण पुत्रोत्पत्तिः। अन्यथा विहिताकरणप्रत्यवायेन प्रतिबद्धं फलपर्य्यवसायिनः स्यात्। एतानि कर्माण्यपि कर्तव्यानीत्यर्थः। यथोक्तकर्मसु सत्यतपःस्वाध्यायप्रवचनानां प्राशस्त्यात्तेषां प्रत्येकमेवावश्यकर्त्तव्यतां मतभेदेनाह—**सत्यमितीति**। राथीतरः रथीतरस्य गोत्रो राथीतर आचार्य्यो मन्यते यतः सर्वदा सत्यमेव वक्ति अतः सत्यवचाः सत्यं वचो यस्य सोयं सत्यवचा इति एवं तस्य नामधेयं स हि सत्यवचनमेवोत्तमं कर्मेति ब्रूते। पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्य्यो मन्यते यतः तपसि नियतो वर्तते अतः तपोनित्य इति एवं तस्य नामधेयं स त्वनशनरूपमेव तपः कर्मोत्तममिति वदति। मुद्गलस्यापत्यं मौद्गल्य आचार्य्यो मन्यते यतः सर्वदा स्वाध्यायप्रवचनाभ्यां तुष्टः सन्निर्दुःखो वर्तते अतो नाक इति

एवं तस्य नामधेयं स तु स्वाध्यायप्रवचने एवोत्तमे कर्मणी इति ब्रवीति। स्वाध्यायप्रवचनवादिनो मौद्गल्यस्य न हानिः तद्धि तपः हि यस्मात्स्वाध्यायप्रवचने एव तपस्तत्तस्मात्ते एवानुष्ठेये तथा चाम्नायते तपो हि स्वाध्याय इति उत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैवेति। हिशब्दोऽनशनाद्यपेक्षया स्वाध्यायादेरधिकफलत्वात्तपस्त्वमिति सूचनार्थः। तद्धि तप इत्यभ्यासो मुख्यतपस्त्वद्योतनार्थः॥ इति नवमोऽनुवाकः॥ ९॥

पूर्वं स्वाध्यायादिब्रह्मयज्ञस्योत्तमतपस्त्वमुक्तं इदानीं तु श्रद्धालोरपि प्रज्ञामांद्यादिदोषेण वेदाध्ययनाशक्तस्य स्वाध्यायरूपब्रह्मयज्ञफलसिद्धये तत्प्रतिनिधिरूपं मंत्रमाह—

**अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳ सवर्चसं। सुमेधा अमृतोऽक्षितः। इति त्रिशंकोर्वेदानुवचनं॥ इति दशमोऽनुवाकः॥ १०॥**

वृक्षस्य वृश्च्यते तत्वज्ञानेनोच्छिद्यत इति वृक्षः तदेव संसाररूपवृक्षस्य रेरिवा विषयवैराग्यरूपशस्त्रेण छेत्ता अंतर्यामिरूपेण प्रेरयिता वा अहं स्यामिति शेषः। संसारवृक्षे च्छिन्ने सति कीर्तिः मदीया ख्यातिः तत्र दृष्टांतः गिरेः पृष्ठमिव यथा पर्वतस्योपरिभागोऽत्यंत उन्नतः तथा मदीया मोक्षविषया कीर्तिरत्यंतोच्छ्रिता सती देवलोकेष्वपि प्रसरति ततो देवा अपि मदीयं पुरुषार्थं विहंतुं न क्षमंते। तथा च श्रूयते तस्य ह न देवाश्च नाभूत्या ईशत इति। ऊर्ध्वपवित्रः ऊर्ध्वमुत्कृष्टं पवित्रं शुद्धिर्यस्य सोऽहमूर्ध्वपवित्रः स्वमृतं सुष्ठु सर्वोत्तमं अमृतं विशुद्धब्रह्मात्मतत्वमस्मि भवामि तत्र दृष्टांतमाह वाजिनीवेति वाजमन्नमस्यास्तीति वाजी सूर्य्यः तस्मिन् वाजिनि सूर्य्ये यथा अमृतं स यश्चायं पुरुषे यश्चासावादित्ये इत्यादिश्रुतिप्रसिद्धं ब्रह्मात्मतत्वविशुद्धमस्ति तद्वदहमस्मीत्यन्वयः। अन्नवत्त्वं चादित्यस्य मधुविद्यायां प्रसिद्धं। धनिकस्य रत्नादिधनमस्ति ब्रह्मविदस्तु आत्मतत्वमेव धनमित्याह—**द्रविणमिति**। द्रविणं निरतिशयस्वरूपं ब्रह्मात्मतत्वं सर्वसंदीप्तिमत्तदेवाहमस्मीत्यनुषंगः। यद्वा ब्रह्मज्ञानं आत्मतत्वप्रकाशकत्वात् सवर्चसं द्रविणमिव द्रविणं मोक्षसुखहेतुत्वादित्यर्थः। सुमेधाः शोभना मेधा ब्रह्मज्ञानप्रतिपादकग्रंथतदर्थावधारणशक्तिरूपा

त्ताभावादित्यर्थः। इतिशब्दो मन्त्रसमाप्त्यर्थः। ननु साध्वकरणपापकरणयोर्भयनिमित्तयोः सत्त्वात्कथं न बिभेतीत्यत आह—एतमिति। एतं आनन्दं ब्रह्मणो विद्वानित्यादौ प्रकृतं विद्वांसं ह प्रसिद्धं वावावधारणे न तपति नैव सन्तापयति। किं न संतापयतीत्यत आह—किमिति। किं कस्मात् अहं साधु शोभनं कर्म नाकरवं न कृतवानस्मि। तथा किं कस्मात् अहं पापं प्रतिषिद्धं कर्म अकरवं कृतवानस्मि इति एवं साध्वकरणादिकं न संतापयतीत्यर्थः। यद्वा एतमिति प्रथमार्थे द्वितीया। तथा च एष विद्वान् कस्मादहं साधुनाकरवं कस्मादहं पापमकरवमिति न तपति पश्चात्तापं न करोतीत्यर्थः। अविदुषस्तु मरणकालासन्ने भवति पश्चात्तापः कुतोऽहं साधुनाकरवं पापमकरवमिति। कुतो विदुषस्तापो न भवतीत्यत आह स य इति। यः पुरुषः एवं विद्वान् आनंदं ब्रह्मणो विद्वानित्युक्तप्रकारेण ब्रह्मात्मानं साक्षात्कृतवान् सः ब्रह्मात्मवेत्ता एते साध्वसाध्वकरणकरणद्वारा तापहेतुत्वेनोक्ते पुण्यपापकर्मणी आत्मानं स्पृणुते आत्मत्वेनैव पश्यति ननु पुण्यपापकर्मत्वेनेत्यर्थः॥

उक्तार्थमनूद्य तापाभावे हेतुमाह—

**उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद। इत्युपनिषत्॥ ९॥ इति ब्रह्मवल्ली।**

हि यस्मात् यः पुरुषः एवं सर्वात्मकमानन्दरूपं ब्रह्मात्मत्वेन वेद जानाति स एषः विद्वान् उभे एते पुण्यपापे अपि आत्मानमेव आत्मरूपेणैव स्पृणुते पश्यतीत्यर्थः। तस्मात् विदुष आत्मभूतेनैव दृष्टे पुण्यपापे तापके जन्मान्तरारम्भके च न भवत इति भावः। इति इयं यथोक्तलक्षणा ब्रह्मविद्या परं श्रेयोऽस्यां निषण्णमिति उपनिषत् सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमिति शेषः। इति ब्रह्मानन्दवल्ली॥ २॥ नवमोऽनुवाकः॥ ९॥

इति ब्रह्मवल्ली।

---

## अथ भृगुवल्ली।

ॐ ब्रह्मविदः शुभाशुभे कर्मणी तापके जन्मान्तरारम्भके च न भवत इत्येवमर्थ आनन्दवल्ल्यां विवक्षितः। एतावता च ब्रह्मविद्या परिसमाप्ता। अथ ब्रह्मविद्यासाधनानि तपोऽन्नादिविषयाण्युपासनानि च वक्तुमिदमारभ्यते।

तत्र पिता प्रियाय पुत्राय प्रशस्तामेव विद्यामुपदिशेन्नान्यामिति विद्यास्तुत्यर्थं पितापुत्रसंवादमाह—

**सहनाववत्विति शान्तिः ॥ ३ ॥ ॐ भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ॥**

भृगुः नामतः वै प्रसिद्धः वारुणिः वरुणस्यापत्यं। वरुणं वरुणसंज्ञकं पितरं स्वजनकं उपससार उप समीपं गतवान्। भगवो हे भगवन् ब्रह्म सत्यादिलक्षणं अधीहि अध्यापय कथयेत्यर्थः। इति एवं पुत्रवचनं श्रुत्वा वरुणः पिता। यद्ययं शुद्धधीः स्यात्तर्हि स्वमेवोपलक्ष्यं ब्रह्म ज्ञास्यतीत्याशयेन शिष्यबुद्धिपरीक्षार्थमुपलक्षणान्येव प्रदर्शयन् त्वंपदार्थोपलक्षणभूतान् शरीरादिपदार्थान् तावदाह—तस्मा इति। तस्मै विधिवदुपसन्नाय स्वपुत्राय भृगवे एतत् वचनं प्रोवाच उक्तवान्। अन्नं शरीरं प्राणं शरीराभ्यन्तरं पञ्चवृत्तिरूपं चक्षुः श्रोत्रमिति ज्ञानेन्द्रियोपलक्षणं। मनःपदेनान्तःकरणचतुष्टयं ग्राह्यं वाचमिति कर्मेन्द्रियोपलक्षणार्थं इति एतान्युक्तान्यन्नादीनि ब्रह्मोपलब्धौ द्वाराणि प्रोवाच इति पूर्वेणान्वयः ॥

एवमन्नादीनां स्वचेष्टाऽन्यथाऽनुपपत्त्या स्वातिरिक्तसाक्षिसिद्धिद्वारत्वमुक्त्वा तत्पदार्थस्योपलक्षणतया जगज्जन्मादिकमाह—

**तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा। प्रथमोऽनुवाकः ॥ १ ॥**

तं भृगुं ह किल उवाच ब्रह्मलक्षणं पितोक्तवान्। यतः यस्मादुपादानात्। वै प्रसिद्धौ। इमानि ब्रह्मादीनि स्तम्बपर्य्यन्तानि भूतानि प्राणिनः जायन्ते उत्पद्यन्ते। येन जातानि येन कारणात्मना जातानि उत्पद्यमानानि जीवन्ति प्राणान्धारयन्ति वर्द्धन्ते। विनाशकाले च प्रयन्ति म्रियमाणानि संति यत् यत्र कारणब्रह्मणि अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते प्रलीयन्त इति

यावत्। तत् जन्मादिकारणभूतं वस्तु ब्रह्म सच्चिदानन्दरूपं। तद्ब्रह्म विजिज्ञासस्व तद्ब्रह्मणो लक्षणं विशेषेण ज्ञातुमिच्छ। यदेवंलक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्व। इतिशब्दो वरुणस्योक्तिसमाप्त्यर्थः। एवं पित्रोक्तमर्थं ज्ञातुमशक्तः सर्वेषां ज्ञानसाधनानां मध्ये तपो ज्ञानं प्रत्युत्कृष्टसाधनत्वेन मन्यमानः स भृगुः तपोऽतप्यत विचारं कृतवान्वाक्यार्थावगतिपर्य्यन्तं तात्पर्य्येण लक्ष्यपदार्थविचारणमावृत्त्यानुष्ठितवानित्यर्थः। तपःशब्देनात्र विचारो विवक्षितः। ननु 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः। तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इति स्मृत्युक्तं बाह्यान्तःकरणसमाधानलक्षणं तपो गृह्यते। वाक्यार्थज्ञानं प्रति तत्त्वंपदार्थशोधनरूपस्यालोचनस्यैव साधकतमत्वात्। गुरूपदिष्टस्य परब्रह्मलक्षणस्यापि क्रमेण कोशेभ्य आत्मतत्वस्य विवेचने एवोपयोगाच्च। नहि ब्रह्मजिज्ञासोर्भृगोर्जिज्ञासिते ब्रह्मणि विचारं विना जिज्ञासानिवर्त्तकमन्यदस्ति। अत एव तद्विजिज्ञासस्वेति श्रुतिमूलके 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे ब्रह्मजिज्ञासोर्विचार एव कर्त्तव्यत्वेनोपदिष्टः। सुरेश्वराचार्य्यैरपि तपःशब्देन विचार एवोक्तः। तदुक्तं 'अन्वयव्यतिरेकादिचिन्तनं वा तपो भवेत्। अहं ब्रह्मेति वाक्यार्थबोधायालमिदं यतः' इति। सूतसंहितायामपि परमेश्वरेणोक्तं—'कोऽहं मुक्तः कथं केन संसारं प्रतिपन्नवान्। इत्यालोचनमर्थज्ञास्तपः शंसन्ति पंडिताः' इति। सः भृगुः तपस्तप्त्वा कुत्रेदं पित्रोक्तं लक्षणं वर्तते केदं लक्षणं परिपूर्णं भवतीत्येकाग्रचेतसा पर्य्यालोच्य॥ इति प्रथमोऽनुवाकः॥ १॥

**अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ २॥**

अन्नं समष्टिव्यष्ट्यात्मकं विराट्संज्ञकं ब्रह्म इति एवं व्यजानात् विज्ञातवान्। अन्नस्य ब्रह्मत्वे पित्रा प्रोक्तलक्षणं योजयति अन्नादिति। हि यस्मात्

अन्नादेव विराडात्मकादेव खलु किल इमानि प्रसिद्धानि भूतानि चराचरशरीराणि जायन्ते उत्पद्यन्ते। जातानि उत्पद्यमानानि अन्नेनोक्तरूपेण जीवंति प्राणान्धारयन्ति। प्रयन्ति म्रियमाणानि सन्ति अन्नं अभिसंविशन्ति आभिमुख्येन प्रविशन्ति। इतिशब्दो वाक्यसमाप्त्यर्थः। तत् उक्तब्रह्मलक्षणोपेतमन्नं विज्ञाय ब्रह्मत्वेन ज्ञात्वा तत्रोत्पत्तिमत्त्वेन परिच्छिन्नत्वविनाशित्वादिदोषं विचिन्त्य पुनरेव भूय एव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति पूर्ववद्व्याख्येयं। तं भृगुं ह प्रसिद्धः पितोवाच। यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति यावच्च जिज्ञासा न निवर्तते तावत्तप एव ते साधनं तपसा आलोचनात्मकेन तपसैव ब्रह्म जगदुत्पत्तिस्थितिलयहेतुत्वेनोक्तं विजिज्ञासस्व विज्ञातुमिच्छ। तपो ब्रह्म तपसो ब्रह्मावगतिहेतुत्वात्तपो ब्रह्मेति तपसः स्तुत्यर्थमुक्तं इतिशब्दो वाक्यसमाप्त्यर्थः। सः भृगुः तपोऽतप्यत। अन्नस्य सूत्रात्मरूपप्राणपारतंत्र्यान्न तत्र निरपेक्षं ब्रह्मलक्षणं संभवति। प्राणस्य तु स्वातंत्र्याद्भवति तत्र ब्रह्मलक्षणमित्यादिविचारं कृतवान्। सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा। इति द्वितीयोऽनुवाकः॥ २॥

**प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत स तपस्तप्त्वा॥३॥**

प्राणः क्रियाशक्त्याश्रयतया प्राणशब्दलक्ष्यभूतो हिरण्यगर्भो ब्रह्मेति एवं व्यजानात् विज्ञातवान्। तत्र ब्रह्मलक्षणं योजयति प्राणादिति। प्राणात् हिरण्यगर्भात् व्याख्यातमन्यत्। तद्विज्ञाय लक्षणोपपत्तिभ्यां प्राणं ब्रह्मत्वेन ज्ञात्वा। तत्रापि मनःपारतंत्र्यं ज्ञानशक्तिराहित्यादिदोषं दृष्ट्वा पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति व्याख्यातं। तं होवाचेत्यादिपूर्ववद्व्याख्येयं। सः भृगुः तपोऽतप्यत प्राणस्य मनसा निरोधदर्शनेन पारतन्त्र्यान्न तत्र ब्रह्मलक्षणं सम्भवति मनसस्तु स्वातंत्र्याज्ज्ञानशक्तिमत्त्वाद्भवति तत्र

ब्रह्मलक्षणमिति विचारं कृतवान् । सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा । इति तृतीयोऽनुवाकः ॥ ३ ॥

**मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥**

मनो ब्रह्मेति व्यजानात् । मन आधिदैविकं समष्ट्यन्तःकरणमेव ब्रह्मत्वेन निश्चितवानित्यर्थः । तत्र ब्रह्मलक्षणं योजयति मनस इति आधिदैविकसमष्ट्यन्तःकरणात् । व्याख्यातमन्यत् । तद्विज्ञाय उक्तलक्षणोपपत्तिभ्यां मनो ब्रह्मत्वेन ज्ञात्वा । तत्रापि कर्तृपारतन्त्र्यादिदोषमवलोक्य पुनरेव वरुणं पितरमुपससारेत्यादि तपोब्रह्मेत्यन्तं पूर्ववद्व्याख्येयं । सः भृगुः तपोऽतप्यत मनसो विज्ञानरूपकर्तृपारतंत्र्यात्तत्र ब्रह्मलक्षणं न युक्तं कर्तरि च स्वातंत्र्येण सम्भवति ब्रह्मलक्षणमिति विचारं कृतवान् । सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा । इति चतुर्थोऽनुवाकः ॥ ४ ॥

**विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । इति पंचमोऽनुवाकः ॥ ५ ॥**

विज्ञानं आधिदैविकमहत्तत्त्वं ब्रह्मेति व्यजानात् विज्ञातवान् । तत्र ब्रह्मलक्षणं योजयति विज्ञानादिति । विज्ञानात् महत्तत्वादित्यादिपूर्ववद्व्याख्येयं । तद्विज्ञाय लक्षणोपपत्तिभ्यां विज्ञानं ब्रह्मत्वेन ज्ञात्वा । तत्रापि पारतन्त्र्यादि-

दोषमाशंक्य पुनरेव वरुणं पितरमुपससारेत्यादि ब्रह्मेत्यन्तं पूर्ववद्व्याख्येयं । सः भृगुः तपोऽतप्यत विज्ञानमपि ब्रह्मत्वं नार्हति । कार्य्यत्वाद्देहादिवत्परिच्छिन्नत्वात् । कर्तृरूपविज्ञानस्योदये भोक्तृरूप आनन्द एव निमित्तं भवति । अतः तत्रैव ब्रह्मलक्षणं सम्पूर्णं भवतीति विचारं कृतवान् । सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

**आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशंतीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता ॥**

आनंदः मायाविशिष्ट ईश्वराख्यः । सर्वैः प्रार्थ्यमानतयाऽऽनन्दरूपः ब्रह्मेत्याध्यात्मिककोशानामिवाधिदैविकानामन्नप्राणादिकोशानामप्युत्तरोत्तरस्य पूर्वपूर्वापेक्षया क्रमेणान्तरत्वं निश्चित्य विशिष्टस्यांतरात्मत्वानुपपत्त्या कारणत्वेन लक्षितः विशुद्धानन्दो ब्रह्मेति व्यजानात् विज्ञातवानित्यर्थः । तत्रापि ब्रह्मलक्षणं योजयति आनन्दादिति । आनन्दाद्ध्येव मायाविशिष्टेश्वराद्ध्येव खल्विमानीत्यादि संविशन्तीत्यन्तं पूर्ववद्व्याख्येयं । एवमन्नादिषु साकल्येन ब्रह्मलक्षणमपश्यञ्छनैः शनैरन्तरान्तरमनुप्रविश्यांतरतमं विशुद्धानन्दं ब्रह्म विज्ञातवान्भृगुः तपसैव साधनेन । तस्माद्ब्रह्मविजिज्ञासुना बाह्यकरणान्तःकरणसमाधानलक्षणं परमं तपः साधनमनुष्ठेयमिति समुदायप्रकरणार्थः । अधुना पितापुत्रसंवादं परित्यज्याख्यायिकया निष्पन्नमर्थं स्ववचनेन श्रुतिराह सैषेति । सा पूर्ववल्ल्या प्रकृता एषा अस्यां वल्ल्यां सन्निहिता भार्गवी भृगुणा विदिता वारुणी वरुणेन प्रोक्ता विद्या ब्रह्मविद्या अन्नं ब्रह्मेत्यारभ्य पूर्वपूर्वप्रहाणेनोपर्युपरि प्रवृत्ता परमे व्योमन् हृदयाकाशगुहायां परमानन्दाद्वैतस्वरूपे ब्रह्मणि प्रतिष्ठिता परिसमाप्ता ॥

उक्तब्रह्मविद्याफलमाह—

**य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति ।**

**महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ इति षष्ठोऽनुवाकः॥ ६॥**

यः भृगुतो भिन्नोऽपि कश्चित् एवं वेद उक्तक्रमेणान्नादिषु तपसैव साधनेन ब्रह्मलक्षणयोजनया तत्रतत्र गृहीतब्रह्मत्वबुद्धिपरित्यागेन सर्वान्तरतमानन्दं ब्रह्मात्मत्वेन जानाति। स विद्वान् प्रतितिष्ठति परे ब्रह्मणि स्थितो भवति ब्रह्मैव भवतीति यावत्। उक्तविदुषो जीवन्मुक्तस्याप्यविद्यालेशवशात् द्वैताभासं पश्यतो दृष्टफलमप्याह अन्नवानिति। अन्नवान् प्रभूतान्नवान्भवति अन्नादः दीप्ताग्निर्भवति महान्भवति महत्त्वं प्राप्नोति। केन महत्त्वमित्यत आह प्रजया पुत्रादिना पशुभिः गवाश्वादिभिः ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तभूतेन ब्रह्मतेजसा महान्भवति कीर्त्या शिष्टाचारनिमित्तभूतेन यशसा महान्भवतीति क्रियानुषंगः॥ इति षष्ठोऽनुवाकः॥ ६॥

विदुषः कर्तव्याभावेप्यन्नस्तुत्यर्थं तस्य कर्तव्यमाह—

**अन्नं न निन्द्यात्। तद्व्रतं। प्राणो वा अन्नं। शरीरमन्नादं। प्राणे शरीरं प्रतिष्ठितं। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितं। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ इति सप्तमोऽनुवाकः॥ ७॥**

अन्नं व्यपकृष्टं प्राप्तं न निंद्यात् गुरुमिव निंदां मा कुर्य्यात् यदृच्छयोपपन्नं वरमवरं वाऽन्नमादरेण भुंजीतेति ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठानार्थं। तत् तस्य विदुषः व्रतम् व्रतमिवानुष्ठेयं स तु व्रतोपदेशोऽप्यन्नस्तुतये। अन्नस्य स्तुतेर्ब्रह्मोपलब्ध्युपायत्वादिति बोध्यं। एतावता ग्रंथेन वाक्यार्थज्ञाने तत्त्वंपदलक्ष्यार्थानुसंधानं मुख्यसाधनं तद्दृष्टफलं चोक्तं। इदानीं तु विचारासमर्थस्य मन्दाधिकारिणोऽन्नान्नादरूपेण प्राणाद्युपासनानि काम्यानि गौणसाधनानि विधीयन्ते प्राण इति। न चैवं सति ब्रह्मविद्याप्रकरणविच्छेदप्रसंग इति वाच्यं। काम्यानां प्राजापत्यफलसम्पादकत्वेपि निष्कामनया-

ऽनुष्ठितानां चित्तैकाग्र्यद्वारा ब्रह्मविद्याहेतुत्वेन संगतत्वात् । प्राणः पंचवृत्त्यात्मको वायुः वै प्रसिद्धः अन्नं अदनीयं शरीरमन्नादं अन्नस्य भक्षकं । तत्र शरीरे इति व्यवहितवाक्यं हेतुत्वेनाह यतः शरीरे प्राणः प्रतिष्ठितः । शरीरान्तःस्थितत्वेन साम्यात्प्राणेऽन्नबुद्धिः शरीरेऽन्नादबुद्धिश्च कर्तव्येत्यर्थः । एवं शरीरमन्नं प्राणोऽन्नादः यतः प्राणे शरीरं प्रतिष्ठितं शरीरस्थितेः प्राणनिमित्तत्वाच्छरीरेऽन्नबुद्धिः प्राणेऽन्नादबुद्धिश्च कर्त्तव्या । तत् तस्मात् शरीरे प्राणस्य प्राणे शरीरस्य प्रतिष्ठितत्वात् एतत् उभयं शरीरं प्राणश्च अन्नमन्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितं अन्नादोऽन्नादे प्रतिष्ठित इत्यर्थः सिद्धो भवति । प्राणशरीरयोरुभयोरन्नान्नादत्वगोचरमुपासनं विधत्ते स य इति । यः पुरुषः एतत् उभयमन्नान्नादरूपं प्राणं शरीरं च अन्नमन्ने अन्नमन्नादे प्रतिष्ठितं वेद उपास्ते सः उपासकः प्रतितिष्ठति शरीरप्राणात्मनैव स्थितो भवति । चिरंजीवी भवतीति यावत् । अन्नवानन्नादो भवतीत्यादि महान् कीर्त्येत्यंतं पूर्ववद्व्याख्येयं । इति सप्तमोऽनुवाकः ॥ ७ ॥

शरीरप्राणमुभयमन्नान्नादत्वगुणकमुपासीनस्यान्नापरिहाररूपव्रतमाह—

**अन्नं न परिचक्षीत । तद्व्रतं । आपो वा अन्नं । ज्योतिरन्नादं । अप्सु ज्योतिः प्रतिष्ठितं । ज्योतिष्यापः प्रतिष्ठिताः तदेतदन्नमन्ने प्रतिष्ठितं । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ८ ॥**

अन्नं अपकृष्टमग्रे प्राप्तं न परिचक्षीत । लोके यथा शुभाशुभमन्नं दृष्ट्वा गुणदोषौ कल्पयित्वा गुणवदन्नमुपादत्ते दोषवदन्नं परिहरति तथा न परिहरेत् । भोजनपात्रे परिवेषितमपि भुक्तोच्छिष्टं न त्यजेत् । किंतु निःशेषमपि भुंजीतेति । तत् तस्योपासकस्य व्रतं नियमाभिधानं । अत्राशुभपदमन्नगतावरत्वरूपदोषपरं । न तु शास्त्रीयदोषपरं । तस्मिन्सति परिहारावश्यंभावादिति बोध्यं । एवमग्रेपि व्याख्येयं । आपो वा अन्नं ज्योतिरन्नादमित्यत्र शरीरादिसंघातान्तःप्रविष्टमेव जलं तेजश्च गृह्यते । प्राणशरीरसमभिव्याहा-

रात् । तत् तस्मात् अप्सु ज्योतिषः ज्योतिषि अपां प्रतिष्ठितत्वात् । एतत् । उभयं तेजो जलं चान्नमन्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितं अन्नादोऽन्नादे प्रतिष्ठित इत्युपासकस्य फलमाह य इति । यः पुरुष एतत् उभयमन्नान्नादरूपं जलं तेजश्च अन्नमन्ने अन्नादमन्नादे प्रतिष्ठितं वेद उपास्ते सः उपासकः प्रतितिष्ठति चिरकालं स्थितो भवति । अन्नवानन्नादो भवतीत्यादिपूर्ववद्व्याख्येयं । इत्यष्टमोऽनुवाकः ॥ ८ ॥

**अन्नं बहु कुर्वीत । तद्व्रतं । पृथिवी वा अन्नम् ॥**
**आकाशोऽन्नादः पृथिव्यामाकाशः प्रतिष्ठितः ॥**
**आकाशे पृथिवी प्रतिष्ठिता ॥**

अब्ज्योतिषोरन्नान्नादगुणत्वेनोपासकस्य व्रतमाह अन्नं बहुकुर्वीत बह्वन्नं संपादयेदिति तद्व्रतं तस्योपासकस्य व्रतं नियमाभिधानं । एवं पृथिव्याकाशयोरपि शरीरादिसंघातेऽन्तःप्रविष्टयोरेव ग्रहणं । पृथिवी वा अन्नं आकाशोऽन्नादः । एवमाकाशोऽन्नं पृथिव्यन्नाद इत्यन्योऽन्यमन्नान्नादमपि बोध्यं । पृथिव्यामाकाशः प्रतिष्ठितः घटोदरे आकाशवत् । आकाशे पृथिवी प्रतिष्ठिता कार्य्यस्य कारणाश्रितत्वात् ॥

**तदेतदन्नमन्ने प्रतिष्ठितं । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ इति नवमोऽनुवाकः ॥ ९ ॥**

तत् तस्मात् पृथिव्यामाकाशस्य आकाशे पृथिव्याः प्रतिष्ठितत्वात् एतत् उभयं पृथिव्याकाशं चान्नान्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितं अन्नादोऽन्नादे प्रतिष्ठित इत्युपासकस्य फलमाह य इति । यः पुरुषः एतत् उभयमन्नान्नादरूपं पृथिव्याकाशं च अन्नमन्ने अन्नादमन्नादे प्रतिष्ठितं वेद उपास्ते । सः उपासकः प्रतितिष्ठति चिरकालं स्थितिं प्राप्नोति । अन्नवानन्नादो भवतीत्यादिपूर्ववद्व्याख्येयं । इति नवमोऽनुवाकः ९

पृथिव्याकाशयोरन्नान्नादगुणत्वेनोपासकस्य व्रतमाह—

**न कंचन वसतौ प्रत्याचक्षीत। तद्व्रतं। तस्माद्यया**

**कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धं मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धं । मध्यतोऽस्मा अन्नꣳ राध्यते ॥**

कंचन कंचिदपि वसतौ स्वगृहे निवासार्थमागतं । न प्रत्याचक्षीत न निवारयेत् । तद्व्रतं तत् तस्योपासकस्य व्रतं नियमाभिधानं । तस्मात् वासे दत्ते अन्नस्याप्यवश्यं देयत्वात् यया कया च विधया येन केन च प्रकारेण बह्वन्नं प्राप्नुयात् बह्वन्नसंग्रहं कुर्य्यात् । बह्वन्नसंग्रहे वसत्यर्थमागतानामप्रत्याख्यानरूपव्रतमेव हेतुमुक्त्वा विद्वदाचाररूपं हेत्वंतरमाह अराद्धीति । यस्मादन्नवन्तो विद्वांसो अस्मै अभ्यागतायाऽन्नार्थिने अन्नमराद्धि अन्नं संसिद्धं इति एवं आचक्षते कथयन्ति बुधाः । नास्तीति प्रत्याख्यानं न कुर्वन्तीत्यर्थः । तस्मात् हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण संबंधः । अन्नदानमाहात्म्यमाह एतदिति । एतद्वै वै प्रसिद्धं एतत् प्रकृतमन्नं राद्धं संसिद्धं मुखतः प्रथमे वयसि । मुख्यया वृत्त्या वा पूजापुरःसरमभ्यागतायान्नार्थिने यः प्रयच्छतीति वाक्यशेषः । तस्य किं फलं स्यादित्यत आह—मुखत इति । मुखतः पूर्वे वयसि मुख्यया वृत्त्या वा श्रद्धाभक्तिरूपयाऽस्मै अन्नदाय अन्नं राध्यते यथा दत्तं तथैवोपतिष्ठत इत्यर्थः । एवं एतत्प्रकृतमन्नं राद्धं संसिद्धं मध्यतो मध्यमे वयसि मध्यमेनोपचारेण वा योऽन्नार्थिने प्रयच्छतीति शेषः । मध्यतो मध्यमे वयसि मध्यमोपचारेण वा अस्मै अन्नार्थिने अन्नं राध्यते यथा दत्तं तथैव संसिध्यतीत्यर्थः ॥

**एतद्वा अन्ततोऽन्नꣳ राद्धं । अन्ततोऽस्मा अन्नं राध्यते ॥ १ ॥**

एतदन्नं राद्धं संसिद्धं अंततोंऽते वयसि जघन्यसत्कारेण वा । योऽन्नार्थिने प्रयच्छतीति वाक्यशेषः । अस्मै अन्नदाय अंततोंऽते वयसि जघन्यसत्कारेण वा अन्नं राध्यते सिद्धं भवति ॥ १ ॥

कस्येदं फलं भवतीत्यत आह—

**य एवं वेद । क्षेम इति वाचि । योगक्षेम इति**

**प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः ॥ २ ॥**

यः पुरुषः एवं यथोक्तप्रकारेणान्नमाहात्म्यं तद्दानफलं च वेद जानाति तस्यैव यथोक्तफलं भवतीत्यर्थः । इदानीं ब्रह्मण उपासनाप्रकारमाह क्षेम इति । क्षेमः प्राप्तस्य परिरक्षणं । वाचि वागिन्द्रिये क्षेमरूपेण ब्रह्म स्थितं इति एवं उपास्यं । योगक्षेम इति प्राणापानयोः । योगोऽप्राप्तस्य प्राप्तिलक्षणः । योगरूपेण प्राणे ब्रह्म प्रतिष्ठितमित्युपास्यं । क्षेमरूपेणापाने ब्रह्म प्रतिष्ठितमित्युपास्यमित्यर्थः । हस्तयोः कर्म्मरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यं । गतिरितिपादयोः पादयोर्गतिरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यं । पायौ गुदे विमुक्तिरिति विसर्ग इति एवं रूपेण ब्रह्म प्रतिष्ठितमित्युपास्यं । इति उक्तलक्षणाः मानुषीः मनुष्येषु भवाः मानुष्य आध्यात्मिक्यः समाज्ञाः आध्यात्मिकान्युपासनानीत्यर्थः ॥ २ ॥

**अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे ॥ ३ ॥**

अथ आध्यात्मिक्युपासनाकथनानंतरं दैवीः दैव्यः देवतासम्बन्धिन्यः उपासना उच्यन्ते इति शेषः । तृप्तिरिति वृष्टौ वृष्टेरन्नादिद्वारा तृप्तिहेतुत्वाद्ब्रह्मैव तृप्तिरूपेण वृष्टौ प्रतिष्ठितमित्युपास्यमित्यर्थः । बलमिति विद्युति । तडिति बलमित्याकारेण ब्रह्म प्रतिष्ठितमित्युपास्यं । यश इति यशोरूपेण पशुषु गवादिषु ब्रह्म प्रतिष्ठितमित्युपास्यं । ज्योतिरिति प्रकाशरूपेण नक्षत्रेषु तारकेषु ब्रह्म प्रतिष्ठितमित्युपास्यं । प्रजातिः पुत्रादिसन्ततिः । अमृतं पुत्रजन्मना पितृऋणविमोक्षद्वारा पितुरमृतत्वप्राप्तिरत्रामृतपदेन विवक्षिता । आनन्दः स्त्रीसंपर्कजन्यं सुखं । यत एतत्त्रयमुपस्थहेतुकं तस्मादुपस्थे शिश्ने प्रजात्यादिरूपेण ब्रह्म प्रतिष्ठितं इति एवं उपास्यं । इदमुपासनं विमुक्तिरिति पायावित्यत्र द्रष्टव्यं । आध्यात्मिकत्वात् । यद्वा उपस्थानन्दस्य देवमनुष्यसाधारण्येपि देवेषूपस्थसुखप्राचुर्याद्दैवीष्वस्या गणना कृतेति बोध्यं ॥ ३ ॥

**सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान्भवति। तन्मह इत्युपासीत। महान्भवति। तन्मन इत्युपासीत। मानवान्भवति ॥४॥**

सर्वमित्याकाशे आकाशे सर्वरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यम्। तत् ब्रह्माभिन्नमाकाशं प्रतिष्ठा सर्वाश्रयमित्युपासीत ध्यायेत्। प्रतिष्ठागुणोपासनात् प्रतिष्ठावान्भवति। अन्नपानादिभिः स्थितिमान्भवतीत्यर्थः। एवं पूर्वद्वितीयमंत्रोक्तवागाद्युपासनेष्वपि क्षेमादिगुणेन ब्रह्मोपासनात् क्षेमादिमान् भवतीति द्रष्टव्यं। तं यथायथोपास्ते तदेव भवतीति वचनात्। तन्महः इत्यत्र तच्छब्देन ब्रह्मोच्यते। तथा च वार्तिकं—'तद्ब्रह्म मह इत्येवमुपासीत ततः फलम्' इत्यादि। तत् ब्रह्म महः महत्त्वगुणवदित्येवमुपासीत ध्यायेत्। महान्भवति प्रजादिभिः समृद्धो भवति। तत् ब्रह्म मनः मननगुणवदित्युपासीत। तत्फलमाह मानवान्भवति मनने समर्थो भवतीत्यर्थः ॥ ४ ॥

**तन्नम इत्युपासीत। नमस्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपासीत। ब्रह्मवान्भवति। तद्ब्रह्मणः परिमर इत्युपासीत। पर्य्येणं म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः ॥ ५ ॥**

तत् ब्रह्म नमः नमनगुणवदित्येवमुपासीत। अस्मै उपासकाय कामाः काम्यंत इति कामाः भोग्या विषयाः नमस्यन्ते प्रह्वीभवन्ति। तत् प्रकृतं ब्रह्म ब्रह्म विराडात्मकमित्येवमुपासीत। तत्फलमाह ब्रह्मवान्भवति स्थूलभोगसाधनवान् विराड्ब्रह्मगुणवान्वा भवतीत्यर्थः। ब्रह्मणः मायोपाधिकस्य तत्स्वरूपतयोक्तमाकाशं परिमरः परिम्रियन्ते लीना भवन्त्यस्मिन्निति परिमरः परिमरत्वगुणकमाकाशमित्युपासीत। एनं उक्तोपासकं द्विषन्तः द्वेषं कुर्वन्तः सपत्नाः शत्रवः परिम्रियन्ते परितो मृता भवन्ति। ये चाप्रिया अद्विषन्तः भ्रातृव्याः शत्रवस्तेपि च परिम्रियन्ते इत्यर्थः ॥ ५ ॥

एवं प्राणो वा अन्नं शरीरमन्नादमित्यारभ्याकाशांतस्य कार्य्यस्यैवोपासनजातं मंदाधिकारिविषयमध्यारोपदशायामुक्तं। ततश्च प्रत्यगात्मोपाधिभूता-

नामेव प्राणशरीरादीनां भोगसाधनत्वरूपमन्नत्वं भोक्तृत्वरूपमन्नादत्वं चोक्तं तथा च कार्य्यविषय एव भोग्यभोक्तृत्वरूपः संसारः नत्वात्मविषयः। आत्मनि तु संसारो भ्रान्त्योपचर्य्यते इत्यपवाददृष्टिमभिप्रेत्याह—

**स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रम्य। एतं प्राणमयमात्मानमुपसङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य। एतं विज्ञानमयमात्मानमुपसङ्क्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन्। एतत्साम गायन्नास्ते॥ ६॥**

सः गुहानिहितवाक्येनोक्तः यः आकाशादिकार्य्यं सृष्ट्वा तदनुप्रविष्टः अयमपरोक्षः प्रत्यगात्मा पुरुषे शरीरे व्यष्ट्युपाधौ वर्तते। यश्च प्रकृतः असौ विद्वत्प्रत्यक्षः परमानन्दात्मा आदित्ये आदित्यमण्डले वर्तते। सः द्विविधत्वेनोक्तश्चेतनः एकः वस्तुतो भेदरहित इत्यर्थः। यः पुरुषः एवंवित् जीवात्मपरमात्मनोरभेदवित् सः विद्वान् अस्माल्लोकात्प्रेत्य दृष्टादृष्टेष्टविषयजातादुपरतो भूत्वा एतं अन्नरसविकारेणोक्तं अन्नमयं स्थूलदेहं आत्मानं भ्रान्त्यात्मत्वेन गृहीतं उपसङ्क्रम्य बाधित्वा। एतं अन्नमयादान्तरत्वेनोक्तं प्राणमयं वायुविकारमात्मानमुपसङ्क्रम्य। एतं प्राणमयादान्तरत्वेनोक्तं मनोमयं संशयात्मकवृत्तिमदन्तःकरणमात्मानमुपसङ्क्रम्य। एतं मनोमयादान्तरत्वेनोक्तं विज्ञानमयं निश्चयात्मकवृत्तिमदन्तःकरणमात्मानमुपसंक्रम्य। एतं विज्ञानमयादान्तरत्वेनोक्तमानन्दमयं निद्राऽऽत्मकसुखानुभवरूपमात्मानमुपसङ्क्रम्य। एवं पूर्ववद्व्याख्येयं सर्वत्र। कामान्नी कामतोऽन्नमस्येति कामान्नी। कामरूपी कामतो रूपाण्यस्येति कामरूपी सन् इमान् शास्त्रप्रसिद्धान् लोकान्भूरादीन् अनुसञ्चरन् आत्मत्वेनानुभवन् एतत् प्रकृतं ब्रह्म साम समत्वात्साम सर्वाभिन्नरूपं। तद्विज्ञानफलं चातिशयेन कृतार्थतारूपं गायन् लोकानुग्रहार्थं प्रख्यापयन् आस्ते तिष्ठतीति सम्बन्धः। एतेन सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेत्यस्य फलवाक्यस्यार्थो विवृतः॥ ६॥

सामगानप्रकारमाह—

**हा३वु हा३वु हा३ वु । अहमन्नमहमन्नमहमन्नं ।**
**अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः ॥**

हावुशब्दो विस्मयार्थः । अभ्यासस्तु तत्रातिशयद्योतनार्थः । तथा च अद्वैत आत्मा निरंजनोपि सन् अहमेवान्नं भोग्यरूपमस्मि । अहमेवान्नादो भोक्तृरूपोऽस्मीति हावु महानाश्चर्य्योऽस्तीत्यर्थः ॥

**अह९ श्लोककृदह ९ श्लोककृदह ९ श्लोककृत् ।**
**अहमस्मि प्रथमजाऋता ३ स्य पूर्वं देवेभ्योऽमृत-**
**स्य ना ३ भायि । यो मा ददाति स इदेवमा३वाः**
**अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनम-**
**भ्यभवां ३ सुवर्णज्योतिः । य एवं वेद । इत्युप-**
**निषत् ॥ ७ ॥ इति दशमोऽनुवाकः ॥ १० ॥**

किञ्च अहं श्लोककृत् अचेतनानामनेकेषां देहेन्द्रियादिरूपाणां श्लोककृत् संघातकर्त्ताऽहमेवास्मीत्यपि महान् विस्मयोऽस्ति । त्रिरुक्तिस्तु सर्वत्र विस्मयाऽतिशयद्योतनार्था । किञ्च ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्य जगतः प्रथमजाः प्रथमोत्पन्नः हिरण्यगर्भोऽहमस्मि भवामि । देवेभ्यः पूर्वं हिरण्यगर्भोत्पत्त्यनंतरमिन्द्रादिदेवेभ्यः पूर्वमेवोत्पन्नो विराट् पुरुषश्चाहमस्मीत्यर्थः । अमृतस्य अमृतत्वस्य नाभायि नाभिर्मध्यमहमस्मि मुमुक्षूणां प्राप्तव्यं यदमृतं तन्मत्स्वरूपमेव । मम परमानन्दस्वरूपत्वादित्यर्थः । यः पुरुषः मा मां अन्नरूपं ददाति अन्नार्थिभ्यः प्रयच्छति सः अन्नदाता इत् इत्थमेवमविनष्टं यथा स्यात्तथा मा मां आवाः अवति दातुरन्नवृद्धिर्भवतीत्यर्थः । यस्तु अन्नमर्थिभ्योऽदत्त्वा भुङ्क्ते तमन्नमदन्तं अन्नं भक्षयन्तं पुरुषं अहमन्नं अहमेवान्नरूपः सन् अद्मि भक्षयामि । विश्वं समस्तं भुवनं भूरादिलोकजातं अहमभ्यभवां अभिभवामि संहर्तृरुद्ररूपेणाहमेव संहरामीत्यर्थः । सुवर्नज्योतिः नशब्द इवार्थः । सुवः न आदित्यइव ज्योतिः अस्मदीयचैतन्यप्रकाशोऽस्तीत्यर्थः । इति इयं वल्लीद्वयेन निरूपिता उपनिषत् परमात्मज्ञानं यः कश्चिदन्योपि एवं भृगुवदुक्ततपआदिसाधनैः वेद सम्पादयति तस्याप्युक्तफलं ब्रह्मभावापत्तिलक्षणं भवतीत्यर्थः ॥ ७ ॥ इति दशमोऽनुवाकः ॥ १० ॥

**सहनाववत्वित्यादिशांतिपाठः ॥ इति तैत्तिरीयोपनिषत् ॥**

तत्र तावत् शिक्षावल्याः प्रारम्भात् पूर्वं शन्नोमित्र इत्यादिशांतिपाठस्य व्याख्या कृता । ततश्च द्वितीयब्रह्मानन्दवल्या आरंभात्पूर्वं सहनाववत्वित्यादिशांतिपाठस्य व्याख्या कृता तथैवात्र भृगुवल्ल्यंतेपि शांतिद्वयपाठस्य व्याख्यावगन्तव्या ॥

इति श्रीमदुदासीनवर्य्यामरदासपदपद्ममकरन्दतृप्तमानसेन श्रीमदमरदासाख्येन विदुषा विरचिता तैत्तिरीयोपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्तिं गता ॥





ॐ तत्सद्ब्रह्मणे नमः

# अथ ऐतरेयोपनिषत् ।

## मणिप्रभाव्याख्यासमलंकृता ।

ॐ यत्राध्यस्तमिदं सर्वं रज्ज्वामुरगवज्जगत् ।
तं वन्दे परमात्मानं कृष्णनामभृतं परम् ॥ १ ॥

ऋग्वेदीयैतरेयोपनिषदि पूर्वोक्ताध्यायत्रयेण प्राणोपासना प्रपञ्चिता । कर्मकाण्डोक्तैः कर्मभिरुपासनया च शुद्धान्तःकरणस्य तत एव साधनचतुष्टयसम्पन्नस्य ब्रह्मविद्याऽधिकारिणो ब्रह्मस्वरूपावस्थानलक्षणमोक्षसिद्धये वक्ष्यमाणाध्यायत्रयेण केवलात्मविद्यारभ्यते—

**ॐ । आत्मा वा इदमेक एवाग्र आसीत् ॥**

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते' इति स्मृतौ आत्मशब्दार्थ उक्तः । एवं स्मृत्युक्त आत्मा द्विविधः व्यवहारविशिष्टः केवलश्चेति । व्यवहारोपि त्रिविधः जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म यत् यस्मादाप्नोति प्राप्नोति तस्मादात्मेति स्मृत्युक्तं प्रथमात्मशब्दनिर्वचनं द्रष्टव्यं । तथा च कैवल्योपनिषदि श्रूयते—सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेतीति । अस्यायमर्थः । सुषुप्तिकाले आनन्दभोगावसरे सकले विलीने निखिले विशेषविज्ञाने स्वकारणे लयं गते तमोऽभिभूतः अज्ञानावृतः सुखस्वरूपमेति आनन्दात्मस्वरूपं गच्छतीत्यर्थः । स्वप्नावस्थायामयं जीवो जागृतिस्थपदार्थवासनाः यत् यस्मादादत्ते गृह्णाति तस्मादात्मेति द्वितीयमात्मशब्दनिर्वचनं । तथाच वाजसनेयिन आमनन्ति—स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा

प्रस्वपितीति । अस्यायमर्थः । स प्रकृतात्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण वागादिबाह्यकरणोपरतिकालीनेन्द्रियाऽजन्यविषयगोचरापरोक्षांतःकरणवृत्त्यवस्थारूपं स्वप्नमनुभवति तदाऽस्य दृष्टस्य लोकस्य जागरितलक्षणस्य कथंभूतस्य सर्वावतः सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ता विद्यन्तेऽस्येति सर्ववान् तस्य सर्वावतः छान्दसो दीर्घः । यद्वा सर्वरक्षकस्य मात्रां लेशरूपां वासनाऽऽत्मिकामुपादाय गृहीत्वा स्वयमात्मैव जाग्रद्देहं तदभिमानं च विहत्य निःसम्बन्धमापाद्य स्वयं स्वयमेव स्वकर्मानुसारेण स्वप्नदेहं प्रातिभासिकं निर्माय निष्पाद्य स्वेनात्मीयेन भासा दीप्त्या वासनोपादानलक्षणांतःकरणवृत्तिप्रकाशरूपेण स्वेन ज्योतिषा आत्मज्योतिषाऽलुप्तदृक् स्वभावेन निर्मितं वस्तु विषयीकुर्वन्प्रस्वपितीत्यर्थः । यत् यस्मादिह जाग्रदवस्थायां चक्षुरादीन्द्रियैर्बाह्यान् रूपादिविषयानत्ति भुंक्ते तस्मादात्मेति तृतीयमात्मशब्दार्थनिर्वचनं । तत्रापि कैवल्यश्रुतिः—स्त्रियाऽन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेतीति । अस्यायमर्थः । स्त्रियाऽन्नपानादिविचित्रभोगैः स्त्रियो मनोऽनुकूला युवतयोऽन्नपाने मनोऽनुकूले आदिशब्देन स्थानाऽऽच्छादनादीनि मनोऽनुकूलानि तैः स्त्र्यन्नपानादिभिर्विचित्रैर्भोगैः । स्त्रियेति छांदसम् । स एव मायापरिमूढ एव नत्वन्यः । जाग्रज्जागरणमिन्द्रियैर्बाह्यविषयोपलब्धिरूपं कुर्वन्परितृप्तिं सर्वतो विषयसुखजां तृप्तिमेति गच्छति सुखं दुःखं च प्राप्नोतीत्यर्थः । एवमुपाधिविशिष्टस्यात्मनोऽवस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तं । इदानीं केवलात्मपरस्यात्मशब्दस्य निर्वचनमुच्यते । यत् यस्मादस्यात्मनो भावः स्वरूपविशेषः सन्ततः परिच्छेदरहितः तस्मादतति सातत्येन सर्वत्र संगच्छतीत्यात्मेति चतुर्थमात्मशब्दार्थनिर्वचनं । तथा च तैत्तिरीये श्रूयते—सत्यं ज्ञानमनन्तं ब्रह्मेति । अत्रानन्तपदेन देशकालवस्तुपरिच्छेदराहित्यमुक्तं । तथा सति केवलात्मा चात्र प्रतिपिपादयिषितः । एक एवेत्युपक्रमे सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानं ब्रह्मेति सर्वस्य प्रत्यगात्मब्रह्मणि कल्पितत्वप्रतिपादके उपसंहारे च केवलात्मप्रतिपादनात्, अमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदिति फलवचनाच्च मध्ये स एतमेव पुरुषं ब्रह्म ततममपश्यदिति परामर्शान्मानान्तराविषयत्वेनापूर्वत्वावगमात्, सृष्ट्याद्युक्तेरर्थवादस्य सत्वाच्च, स एतमेव सीमानं विदार्यैतया द्वारा

प्रापद्यतेति प्रवेशवचनस्य, तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्ववचनस्य चोपपत्त्यभिधानस्य सत्त्वाच्चेति । वैशब्दोऽवधारणे । इदं सर्वजनैः प्रत्यक्षादिप्रमाणैः प्रतीयमानं जगत् अग्रे सृष्टेः प्राक् आत्मा वै आत्मैव आसीत् अभवत् नतु तत्कार्य्यभूतं नामरूपात्मकं जगदासीत् । यथा लोके मृत्कार्य्यघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति नतु घटादिकार्य्यं । तथापि मृद्गोचरशब्दप्रत्ययौ विद्येते । तथाऽत्रापि प्रसक्तौ शब्दप्रत्ययावपि वैशब्देन व्यावर्त्येते । देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यशब्दस्य मनोनिष्पाद्यप्रत्ययस्य च सुतरामभावात् । न चेदमात्मा वा आसीदिति सामानाधिकरण्यश्रवणेन नीलमुत्पलमितिवत् वैशिष्ट्यस्य प्रतिभानादात्मकेवलत्वासिद्धिरिति वाच्यं । यश्चोरः सः स्थाणुरेवेतिवत् यज्जगत्त्वेनेदानीं प्रतिभासते तज्जगन्न भवति किंत्वात्मैवेति बाधायामपि सामानाधिकरण्योपपत्तेः । न चैवमप्यग्र आसीदिति पूर्वकालवचनमनर्थकं अद्याप्यात्माद्वैतस्य जगन्मिथ्यात्वस्य च सुवचत्वादिति वाच्यम् । इदमात्मैव भवतीत्युक्ते प्रत्यक्षविरोधान्न सहसाऽर्थग्रहणं स्यात् प्रागेवेति बोधिते तु तन्न्यायेनेदानीमपि तथेति स्वयमेव ज्ञास्यतीत्याशयेन पूर्वकालोक्त्युपपत्तेः । यद्वा 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'तम आसीत्' इत्यादिवाक्यान्तरेषु जगतो मायामयत्वमुक्तं । इह त्वात्मरूपत्वमिति श्रुत्योर्विरोधपरिहाराय वाक्यान्तरेषु आत्मपदं इह त्वव्याकृतपदमुपसंह्रियते । तथा चेदमग्रेऽव्याकृतमासीदव्याकृतं चात्मैवेत्यर्थपर्य्यवसानेन परिणममानाऽविद्याऽधिष्ठानतयाऽऽत्मनो विवर्तोपादानत्वं जगतो मिथ्यात्वं च सिद्ध्यति । तथा चेदानीं जगतोऽव्याकृतावस्थाविरहादग्र इत्यस्य न वैयर्थ्यं । यद्वा इदमग्र आत्मैवासीदित्यंशेन कार्य्यस्य प्राग्रूपंमानांतरसिद्धमनूद्य एक एव नान्यत्किञ्चनेत्यनेनात्मनोऽखंडैकरसत्वं विधीयत इति न कस्यापि वैयर्थ्यं । मानान्तरं तु उत्पत्तिप्राक्कालीनमिदं जगत्सोपादानं सकर्तृकं च कार्य्यत्वात् घटादिवदित्यादिरूपं बोध्यम् । नहि कर्त्रुपादानयोर्भेदोऽस्ति गौरवप्रसंगात् । एवमुक्तात्मनोऽखण्डैकरसत्वमेकादिशब्दैः स्पष्टीक्रियते । यथा लोके वृक्षादौ स्वगतः सजातीयो विजातीयश्चेति त्रिविधो भेदो दृश्यते । तत्र स्कंधशाखापत्रादिप्रतियोगिको वृक्षस्य स्वगतभेदोऽस्ति । वृक्षान्तरप्रतियोगिकः सजातीयः । पाषाणादिप्रतियोगिको विजातीयश्च । एवमात्मनोपि भेदत्रयप्रसक्तौ

एकशब्देन स्वगतभेदो व्यावर्त्यते। तथा च एकः स्वगतभेदरहित इत्यर्थः। एवकारेणात्मान्तरो व्यावर्त्यते। योऽयमेकः सएव न त्वन्यः कश्चित्सजातीयोऽस्तीत्यर्थः।

विजातीयभेदं व्यावर्त्तयति—

**नान्यत्किंचन मिषत्॥**

अन्यत् प्रकृतात्मनो विलक्षणं किञ्चन किञ्चिदपि वस्तु न मिषत् धातूनामनेकार्थत्वान्नासीदित्यर्थः। न च ब्रह्मणो जगदुपादानत्वाय स्वीकृताया मायाशक्तेः पुरापि सत्वात्कथं विजातीयनिषेध इति वाच्यं। आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनाऽयोग्यत्वात्। यद्वा मिषत् सव्यापारं नासीत्। तथा च निर्व्यापारस्य परिणाम्युपादानस्य सत्वेपि न क्षतिः। यद्वा मिषत् स्वतःसत्ताकं नासीत् तथा चाग्रेऽधिष्ठानसत्ताकस्य सत्त्वेपि न क्षतिः। न च कालस्यापि सृष्ट्यंतर्भावात्कालवाचकोऽग्रशब्दोऽनुपपन्न इति वाच्यं। प्राक्काले घटशरावादिकं मृदेवासीदित्यादिवाक्येषु कालसम्बन्धेनैव बोधनस्य प्रसिद्धत्वेनाऽत्रापि तथैव बोधयितुं कालसम्बन्धारोपोपपत्तेः। दीपिकायां तु पररीत्या परो बोधनीय इति न्यायेन परमते कालस्य नित्यत्वेन प्रागपि विद्यमानत्वात्तद्रीत्या कालसम्बन्धोपपत्तिरित्युक्तम्। न चात्मा वा आसीदिति सत्तावैशिष्ट्यमेव प्रतीयते कर्तुः क्रियाश्रयत्वादिति वाच्यम्। सविता प्रकाशत इत्यादौ कर्तृवाचिप्रत्ययस्य साधुत्वमात्रार्थत्वेन लक्षणयाऽभेदार्थकत्वेन वा सवितुः प्रकाशरूपत्वप्रत्ययवदात्मन एव सद्रूपत्वप्रतीतेः आत्मातिरिक्तसत्ताजात्यभावाच्च॥

एवं सूत्रितमात्मनोऽखंडैकरसत्वं साधयितुमुपक्षिप्तं जगतो मिथ्यात्वमध्यारोपापवादाभ्यां दृढीकर्तुमध्यायशेषः। तत्रापि स जातो भूतानीत्यतः प्राक्तनो ग्रंथोऽध्यारोपार्थः। तत्प्रभृति ग्रंथोऽपवादार्थः। तत्रापि वाचारम्भणन्यायेनात्मातिरिक्तस्य विकारस्य मृषात्वं वक्तुं सृष्टिवाक्यं। तत्र स्रष्टुरात्मनः संभावितं चेतनत्वं दृढीकर्तुमीक्षणमाह—

**स ईक्षत लोकान्नु सृजा इति॥ १॥**

सः 'आत्मा वा' इत्यनेन सूचितः परमेश्वरः एकः सन्नीक्षत इच्छां कृतवान्। नन्वेकस्याखण्डस्य कथमीक्षणमुपपद्यते साधनाभावादित्याशंक्य न तस्य

साधनापेक्षेत्यभिप्रेत्य एकः सन्नपि परमेश्वरः सर्वज्ञस्वरूपत्वादीक्षत इति युक्तमुक्तं । ईक्षत इत्यत्राडागमाभावश्छांदसः । ईक्षणस्वरूपमेवाह लोकान्नु सृजा इति । नुशब्दो वितर्कार्थे । लोकान् प्राणिकर्मफलभोगस्थानभूतान् पृथिव्यादीन् सृजै अहं सर्जनं करवाणीतीक्षणं कृतवानित्यर्थः ॥ १ ॥

**स इमाँल्लोकानसृजत । अंभो मरीचीर्मरमापो-ऽदोंऽभः परेण दिवं द्यौः प्रतिष्ठांऽतरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः ॥ २ ॥**

सः परमेश्वरः एवं ईक्षणं कृत्वा इमान् वक्ष्यमाणलोकानम्भःप्रभृतीन् प्राणिनां कर्मफलभोगस्थानान् असृजत सृष्टवान् । यद्यपीह त्वात्मा वा इद-मेक एवासीदिति केवलात्मतत्वं प्रकृतं तथापि निर्विकारस्य जगद्भावापत्त्य-सम्भवेन 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुत्यंतराभ्यां मायाशक्तिरप्यत्रार्थादुक्तेति द्रष्टव्यम् । यद्यपि लोकान्नुसृजा इति ईक्षणमात्रश्रवणेन कुलालवन्निमित्तकारणत्वमेव प्रतीयते नतूपादानत्वं । तथापि सोऽकामयत बहु स्यां प्रजायेयेति शाखान्त-रगतस्वबहुभवनबोधकवाक्यस्य गुणोपसंहारन्यायेनात्रोपसंहारादुपादानत्वमपि सिद्ध्यति । तथा च भगवता व्यासेनोक्तं—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरो-धात्'इति । अस्यायमर्थः । अयं परमात्मा प्रकृतिरुपादानकारणं चकारान्निमि-त्तत्वं चापि भवति कुतः प्रतिज्ञादृष्टान्तानुपरोधात् येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकात्मज्ञानेन सर्वविज्ञानप्रतिज्ञा । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तश्च । तयोः प्रतिज्ञादृष्टान्तयोः सामंजस्यादिति । स्रष्टव्यानां लोकानां भौतिकत्वेन भूतोत्पत्तिव्यतिरेकेण तेषामुत्पत्त्यसंभवाद्भूतसृष्टिरप्यत्रोपसंहरणीया । सा च तैत्तिरीये आम्नायते— 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति । कान् लोकानसृजत इत्याकांक्षायां स्वस्वनाम्ना तान्निर्दिशति अंभोमरीचीर्मरमाप इति । आकाशाद्युत्पत्तिक्रमेणाण्डमुत्पाद्याम्भः मरीचीः मरं आप इति नामकान् लोकानसृजतेत्यर्थः । अंभआदिशब्दानां लोकेष्वप्रसि-द्धत्वादतः स्वयमेव श्रुतिस्ताञ्छब्दान् व्याचष्टे अदोंऽभ इति । दिवं परेण

[illegible] महर्लोकजनलो[illegible]तपोलोकसत्यलोकाख्या ये लोकाः या च द्यौः प्रतिष्ठा सर्वेषां देवानामाश्रयभूतो द्युलोकः अदोऽम्भः एतत् सर्वमंभःशब्दवाच्यो लोक इत्यर्थः । लोकानां पांचभौतिकत्वेप्यपां भरणादप्प्राधान्यमभिप्रेत्यादोऽम्भ इत्युक्तं । अंतरिक्षं मरीचयः द्युलोकादध[illegible]लोकः सूर्य्यस्य मरीचीनामाधारत्वान्मरीचिशब्देन सूर्य्यकिरणसंबंधादंतरिक्षलोकं लक्षयित्वा तस्यैकत्वेप्यनेकस्थानभेदान्मरीचय इति बहुवचनमुक्तं । पृथिवी मरः भूलोकस्थप्राणिनां सहसा म्रियमाणत्वान्मरशब्देन भूलोक उपलक्ष्यते । याः प्रसिद्धाः अधस्तात् पृथिव्या अधोवर्त्तिन्यः पातालादिविशेषभोगभूमयः संति ताः उक्तलक्षणाः सर्वाः तत्तल्लोकवासिभिर्नागादिभिराप्यमानत्वादाप इत्युच्यंत इत्यर्थः ॥ २ ॥

एवं लोकसृष्टिमुक्त्वा लोकपालसृष्टिं श्रुतिराह—

**स ईक्षतेमे नु लोका लोकपालान्नुसृजा इति ।**
**सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥ ३ ॥**

सः प्रकृतः परमेश्वरः पुनरेवैक्षत अव्ययानामनेकार्थत्वात् नुशब्दस्तुशब्दार्थः । वैलक्षण्यं लोकानामाह इमे नु पूर्वोक्तास्त्वंभःप्रभृतयो मया सृष्टा लोकाः तत्परिपालयितृवर्जिता विनश्येयुस्तस्मादम्भःप्रभृतिलोकानां रक्षणार्थं लोकपालान् लोकानां पालयितृन्देवान् नु निश्चयेन सृजै अहं सृजे इति एवं ईक्षत ईक्षणं कृतवानिति पूर्वेण संबन्धः । सः ईक्षणवानीश्वरः अद्भ्य एव अप्शब्देन तल्लक्षितपञ्चभूतेभ्य एव पुरुषं पुरुषाकारं शिरःपाण्यादिमंतं विराजं समुद्धृत्याद्भ्यः सम्यक् उपादाय अमूर्च्छयत् मूर्त्तं कठिनमकरोत् । यथा कुलालस्तडागस्थजलस्याधस्तादार्द्रां मृदमानीय शोषयित्वा कठिनं पिण्डं करोति तद्वदित्यर्थः ॥ ३ ॥

विरा[illegible]त्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्प[illegible]त्तिमाह—

**तमभ्यतपत्तस्याभित[illegible]स्य मुखं निरभिद्यत यथाण्डं [illegible]ऽग्निः । नासिके निरभिद्येतां ना[illegible]काभ्यां प्राणः प्राणाद्वा[illegible]ः । अक्षिणी निरभिद्येताम[illegible]ीभ्यां चक्षुश्चक्षुष आदित्यः । क-**

**र्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः । हृदयं निरभिद्यत हृदयान्मनो मनसश्चंद्रमाः । नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः । शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥ इति प्रथमः खंडः ॥**

तं विराट्पुरुषं अभ्यतपत् तच्छिद्रतद्गतेंद्रियतत्तदभिमानिदेवतासृष्ट्यर्थं परमेश्वरः पर्य्यालोचितवान् । अभितप्तस्य अभितो विचारितस्य तस्य विराट्पिण्डस्य मुखं मुखाकारच्छिद्रं निरभिद्यत छिद्रवदभूत् यथाण्डं पक्षिसर्पादीनां पक्वमंडं येन प्रकारेण निर्भिन्नं भवति तद्वत् । मुखात् मुखाकारछिद्रात् वाग् वागिन्द्रियं निष्पन्नमिति शेषः । यद्यपि वागादिकरणजातमपञ्चीकृतभूतकार्य्यं न मुखादिगोलककार्य्यं तथापि मुखाश्रये तदभिव्यक्तेः मुखाद्वागित्युक्तमिति भावः । वाचः वागिन्द्रियात् अग्निः लोकपालो वागधिष्ठात्री देवता निष्पन्ना । एवमुत्तरपर्य्यायेष्वपि छिद्रेन्द्रियदेवतानां चोत्पत्तिर्व्याख्येया । तथा नासिके नासाछिद्रे निरभिद्येतां अजायेतां नासिकाभ्यां प्राण इत्यत्र प्राणशब्देन प्राणवृत्तिसहितं घ्राणेन्द्रियमुच्यते तथा च नासिकाभ्यां घ्राणेन्द्रियमजायतेति शेषः । प्राणाद्वायुः घ्राणेन्द्रियाद्वायुरूपदेवताऽजायत । अक्षिणीछिद्रे निरभिद्येतां अजायेतां । अक्षीभ्यां उक्तछिद्राभ्यां चक्षुः चक्षुरिन्द्रियमजायतेति शेषः । चक्षुषः चक्षुरिन्द्रियादादित्यः सूर्य्यो देवताऽजायत । कर्णौ कर्णछिद्रौ निरभिद्येतां अजायेतां कर्णाभ्यां उक्तकर्णछिद्राभ्यां श्रोत्रं श्रोत्रेंद्रियं अजायतेति शेषः । श्रोत्राद्दिशः श्रोत्रेन्द्रियाद्दिग्देवताऽजायत । त्वक् त्वग्गोलकं चर्म निरभिद्यत त्वचो त्वग्गोलकात् लोमानि लोमशब्देन लोमाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते तदजायत । लोमानीत्यत्र बहुवचनं छांदसं । लोमभ्यः लोमाधारस्पर्शनेन्द्रियादोषधिवनस्पतयः ओषध्यादिशब्देन तदधिष्ठात्री वायुदेवतोच्यते । हृदयशब्दस्यान्तःकरणार्थत्वदर्शनान्मनःशब्देनापि तस्यैवाभिधाने पौनरुक्त्यमित्याह—हृदयमिति । हृदयं अष्टदलं हृदयकमलं निरभिद्यत । अजायत हृदयात् हृदयकमलान्मनः अंतःकरणमजायतेति शेषः । मनसोऽन्तःकरणात्तदधिष्ठात्री चन्द्रमा देवता निरभिद्यतेति

पूर्वेणान्वयः । नाभिः गुदमूलं नाभ्याः गुदच्छिद्रात् अपानः अपानसंबंधि पाय्विन्द्रियं अपानात् पाय्विन्द्रियात् मृत्युः पाय्वधिष्ठात्री देवता यमः निरभिद्यत अजायत। शिश्नं प्रजननोपस्थेन्द्रियगोलकं निरभिद्यत शिश्नात् उपस्थेन्द्रियगोलकात् रेतः वीर्य्यविसर्गनिमित्तभूतमुपस्थेन्द्रियं रेतसः उपस्थेन्द्रियात् आपः अप्शब्देन तल्लक्षितपञ्चभूतोपाधिकः प्रजापतिरधिष्ठात्री देवता निरभिद्यतेति पूर्वेणान्वयः। एवं सर्वत्र पर्य्यायेषु गोलकं इन्द्रियं देवता चेति त्रयं क्रमेण निर्भिन्नमुक्तमित्यर्थः ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥

एवं पूर्वखण्डे समष्टीनामिन्द्रियाणां तदभिमानिदेवतानां च सृष्टिरुक्ता। इदानीं तासां देवतानां भोगयोग्यांल्पदेहसृष्टिं व्यष्टिदेहेषु भोगार्थं देवतानां व्यष्टिरूपेण प्रवेशं च विवक्षुस्तदुपोद्धातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति—

**ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतं स्तमशनायापिपासाभ्य मन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥**

ता एताः उक्तलक्षणाः इंद्रियतदभिमानिदेवताः अग्न्यादयः सृष्टा ईश्वरेणोत्पादिताः सत्यः अस्मिन् पूर्वोक्ते महत्यर्णवे समुद्रवदत्यंतविस्तृते ब्रह्मांडरूपे विराड्देहे प्रापतन् प्रकर्षेण पतिता अभूवन्। तं पूर्वोक्तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं विराट्शरीरं । अशनायापिपासाभ्यां क्षुत्तृषाभ्यां अन्ववार्जत् अनुगमितवान् संयोजितवानित्यर्थः। अल्पदेहसृष्टिमाह ता एनमिति । तास्ततोऽशनायापिपासाभ्यां पीड्यमाना इंद्रियतदभिमानिदेवताः एनं स्वस्रष्टारं पितामहं परमेश्वरं अब्रुवन् उक्तवत्यः । तदुक्तिमाह भोः परमेश्वर नः अस्मभ्यं आयतनं शरीरं प्रजानीहि विधत्स्वावधारय संपादयेति यावत् । यस्मिन् शरीरे प्रतिष्ठिताः स्थिताः अन्नं भोग्यरूपं अदाम भक्षयाम इति एनमब्रुवन्निति पूर्वेणान्वयः। तासामयमाशयः अत्यन्तविस्तीर्णोऽयं विराड्देहः अस्माकं भोगयोग्यो न भवति यतोऽतिप्रौढं विराड्देहमापूर्य तत्र स्थातुं वयमसमर्थाः एतद्देहपर्य्याप्तमन्नं च वयं संपादयितुं न क्षमाः अतो यस्मिन्नल्पशरीरे स्थिताः सत्यः वयं देहपर्य्याप्तमन्नं संपाद्यात्तुं शक्ता भवामः तादृशं व्यष्टिशरीरं सृजेति ॥ १ ॥

एवमुक्त ईश्वरः—

**ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २॥**

ताभ्यः देवताभ्यः गां गवाऽऽकृतिविशिष्टं पिण्डं आनयत् पञ्चभूतेभ्यः समुद्धृत्य दर्शितवान् ताः देवताः गवाऽऽकृतिं दृष्ट्वा अब्रुवन् उक्तवत्यः नोऽस्माकं अयं गोपिण्डः न वै अलं भोगक्षमो नैव भवति गोशरीरस्योपरिदंतानामभावेन दूर्वादिमूलस्योत्खातुमशक्यत्वे उपभोगासमर्थत्वादतोऽन्यं देहं उभयतोदन्तवन्तं सृज इति एवमब्रुवन्निति योजना । एवं गोशरीरे प्रत्याख्याते सति ताभ्यः देवताभ्यः अश्वमानयत् पञ्चभूतेभ्योऽश्वशरीरं समुद्धृत्य आनीतं दर्शितवान् । ताः देवताः अश्वाकृतिं दृष्ट्वा इति एवं अब्रुवन् उक्तवत्यः अश्वशरीरस्योभयतोदंतवत्त्वेनोक्तदोषाभावेऽपि पशुत्वेन विवेकायोग्यत्वादयं अश्वदेहोपि नोऽस्माकं न वै अलं विवेकज्ञानाभावाद्भोगाय पर्य्याप्तो नैव भवति । गवाऽश्वशरीरग्रहणस्य सर्वतिर्यग्देहोपलक्षकत्वमभिप्रेत्येत्युक्तमिति भावः ॥ २ ॥

एवं सर्वशरीरे दर्शिते प्रत्याख्याते सति—

**ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं । ता अब्रवीद्यथाऽऽयतनं प्रविशतेति ॥ ३॥**

ताभ्यः देवताभ्यः पुरुषं पुरुषशरीरं आनयत् परमेश्वर आनीतवान् ताः देवताः पुरुषशरीरं दृष्ट्वाऽखिन्नाः सत्यः बतेति हर्षे सुकृतं परमेश्वरेण शोभनं कृतं इति एवमब्रुवन् यतो लोकेपि पुरुषो वाव पुरुषशरीर एव सुकृतं 'सुकृतं तु शुभे पुण्ये' इति मेदिन्युक्तेः पश्वाद्यपेक्षया सर्वपुण्यकर्महेतुत्वात् शोभनं कृतमित्यर्थः । एवमीश्वररचितेषु भोगयोग्यव्यष्टिदेहेषु करणानां देवतानां च व्यष्टिरूपेण स्वस्वस्थाने प्रवेशायेश्वरस्यानुज्ञां दर्शयति ता इति । ताः देवताः प्रतीश्वरोऽब्रवीत् उक्तवान् यथाऽऽयतनं यस्य यद्वदनादिक्रियायोग्यं यद्यद्गोलकरूपस्थानमस्ति तदनतिक्रम्य प्रविशत प्रवेशं कुरुत । यथा राज्ञोऽनुज्ञां प्रतिलभ्य सेनापत्यादयो नगर्यां स्वस्वस्थाने प्रविशंति । इति एवमीश्वरस्यानुज्ञां प्रतिलभ्याग्न्यादयोपि देवताः मुखादिस्वस्वस्थाने प्राविशन्नित्यर्थः ॥ ३ ॥

एवमीश्वरेणानुज्ञातानां देवतानां स्वस्वस्थाने प्रवेशं दर्शयति—

**अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चंद्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥**

अग्निः वागिंद्रियाभिमानी देवः वाग्भूत्वा वागिंद्रियेंऽतर्भूय मुखं मुखात्मकछिद्रं प्राविशत् प्रवेशं कृतवान् । यद्यपि वागभिमानी देवोऽग्निः वाकेंद्रियं तथाप्यग्निरूपदेवस्य वाचंविना प्रत्यक्षमनुपलब्धेः वाचोपि देवतांविना स्वविषयग्रहणासामर्थ्यात्तयोरेकलोलीभावेनाभेदोक्तिरिति भावः। यद्यपि देवतानामेवेश्वरेण प्रवेश उक्तो नत्विन्द्रियाणां तथापि करणैर्विना देवतानां साक्षाददनादिभोगासंभवात्तेषामपि प्रवेशोऽर्थादुक्त एवेति बोध्यं ।वायुः देवतारूपः प्राणो भूत्वा घ्राणेंद्रियेंऽतर्भूय नासिके नासाछिद्रे प्राविशत् प्रवेशं कृतवान् । आदित्यः सूर्यो देवतारूपः चक्षुर्भूत्वा चक्षुरिंद्रियेंऽतर्भूय अक्षिणी छिद्रे प्राविशत् पूर्ववद्व्याख्येयं सर्वत्र। दिशः दिग्देवतारूपाः श्रोत्रं भूत्वा श्रोत्रेंद्रियेंऽतर्भूय कर्णौ कर्णछिद्रे प्राविशन् । ओषधिवनस्पतयः ओषध्याद्यधिष्ठाता वायुः देवतारूपः लोमानि भूत्वा लोमाधारभूतत्वङ्निष्ठं स्पर्शनेंद्रियं भूत्वा त्वचं स्पर्शनेंद्रियस्थानं चर्मात्मकं प्राविशत् प्रवेशं कृतवान् । चन्द्रमा देवता मनो भूत्वा मनोंऽतर्भूय हृदयं अष्टदलाकारं हृदयकमलं प्राविशत् । मृत्युः यमरूपो देवताऽपानो भूत्वा पाय्विंद्रियं भूत्वा नाभिं पायुस्थानं गुदमूलं प्राविशत् । आपः अप्शब्देन लक्षितपंचभूतोपाधिकः प्रजापतिरधिष्ठात्री देवता रेतो भूत्वा उपस्थेंद्रियं भूत्वा शिश्नं उपस्थेंद्रियगोलकं प्राविशदित्यर्थः ॥ ४ ॥

अशनायापिपासयोरपि व्यष्टिदेहेऽधिकरणाधिष्ठातृदेवतासंबंधमिव प्रवेशं प्रश्नपूर्वकं दर्शयति—

**तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानी-**

इति । ते [illegible] जाम्ये-
तासु भागिन्यौ करोमीति । [illegible] स्यै कस्यै च
देवतायै हविर्गृह्य[illegible] भागिन्या[illegible] [illegible]-
यापिपासे भवतः ॥ ५ ॥ इति द्वितीयः खंडः ॥

तं परमेश्वरं अशनायापिपासे क्षुत्तृषे [illegible] अब्रूतां उक्तवत्यौ । तयोरु-क्तिमाह आवाभ्यामिति। हे परमेश्वर आवाभ्यां क्षुत्पिपासाभ्यां अभिप्रजानीहि स्थानविशेषं चिंतय संपादयेति यावत् । परमेश्वरस्तु तयोः स्थानविशे[illegible] त्रीह्या-एतासु उक्तलक्षणासु देवतास्वेव अग्न्यादिरूप [illegible] वां युवां अवत् । सः भागैकदेशप्रदानेना गृह्णामि । उक्तमेव स्पष्टीकरोति एतासु भागि[illegible]ाणेन्द्रियेण एतासु अग्न्यादिदेवतासु यदेवत्यो यो भागो हविरादिलक्षणः स्यात्त[illegible] ह प्रसिद्धं भागेन भागिन्यौ भागवत्यौ वां युवां करोमि इति । एवं ते अशनाया[illegible]ित् ॥ ४ ॥ परमेश्वरः अब्रवीत् उक्तवानिति योजना । उक्तमर्थमिदानींतनलो[illegible] । रेण दृढीकर्तुमाह दिति। यस्मात्सृष्ट्यादावीश्वरेणैवमुक्तं तस्मात् । ५ ॥ लोके इदानीमपि यस्यै कस्यै च देवतायै अग्न्यादिदेवतार्थं हविः [illegible]च्छत् । तत् डाशादिलक्षणं भोग्यवस्तु गृह्यते समर्प्यते अस्यां अग्न्यादिदेवतायां [illegible]शक्नोत् न पिपासे क्षुत्तृषे अपि भागिन्यावेव भागवत्यौ एव भवतः । तथा च[illegible] उक्तान्नं ऽग्न्यादिदेवतातृप्तौ अशनायापिपासयोरपि तृप्तिरूपशांतिर्जायत इति त[illegible] सर्वोपि भागवत्त्वमुक्तमित्यर्थः। नच चक्षुरादिना रूपादिग्रहणदशायामशनायापिपासयाने शांतिर्दृश्यत इति न सर्वत्र भागवत्त्वं तयोरिति शंक्यं । क्षुत्पिपासार्तस्यान्नपान-दर्शनश्रवणादिनाऽन्नपानप्रत्यासत्तिपरितोषेण मनसि तृष्णा शांतेव भाति नतु यथापूर्वं बाधत इति चक्षुरा[illegible] ॥ [illegible] ॥

इति द्वितीयः खंडः ॥

एवं देवानामिन्द्रियाणां चोत्पत्तिमभिधाय तेषां प्रवृत्तिहेतुभूतयोरशनायापि-पासयोश्च भोगसाधनसृष्टिमुक्त्वा इदानीं भोग्यसृष्टिमाह— [illegible]यात्

**स ईक्षतेमे नु लोकाश्च लो[illegible]कपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥** शब्दं

सः ईश्वरः इति एवं ईक्षत ईक्षणं कृतवान् ईक्षणप्रकारमाह इमे इति नुशब्दो वितर्कार्थे । इमे पूर्वोक्ताः लोकाः पृथिव्यादयः लोकपालाः सेन्द्रि

व्रीह्यादिलक्षणं अभिव्याहृत्यैव तद्वाचकैः शब्दैरभिधायैव अत्रप्स्यत् तृप्तोऽभविष्यत्। न हि वागिंद्रियस्याभिधानव्यतिरेकेण किञ्चिदप्याकर्षणसामर्थ्यमस्ति। न ह्यन्नवाचकशब्दोच्चारणमात्रेण तृप्तिश्च दृश्यते। अत एव सृष्टिकालेपि वाचाऽन्नग्रहणसामर्थ्यं नास्तीत्यनुमीयते इति भावः ॥ ३ ॥

**तत्प्राणेनाजिघृक्षत् तन्नाशक्नोत्प्राणेन ग्रहीतुं।**
**स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्॥४॥**

तत् पूर्वोक्तमन्नं प्राणेन घ्राणेंद्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् व्रीह्याद्यन्नं प्राणेन घ्राणेंद्रियेण ग्रहीतुं उपादातुं नाशक्नोत् न समर्थोऽभवत्। सः प्रथमजः शरीरी यत् यदिह प्रसिद्धं एनत् उक्तमन्नं प्राणेन घ्राणेन्द्रियेण अग्रहैष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्यवर्ग्गः सर्वोपि जनः ह प्रसिद्धं अन्नं व्रीह्यादिलक्षणं अभिप्राण्यैव आघ्रायैव अत्रप्स्यत् तृप्तोऽभविष्यत्॥ ४ ॥

**तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुं।**
**सयद्धैनच्चक्षुषाऽग्रहैष्यदृष्ट्वा हैवान्नमत्रप्स्यत्॥ ५ ॥**

तत् उक्तान्नं चक्षुषा चक्षुरिन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत्। तत् व्रीह्यादिलक्षणान्नं चक्षुषा चक्षुरिन्द्रियेण ग्रहीतुं उपादातुं नाशक्नोत् न समर्थोऽभवत्। सः प्रथमजः शरीरी यत् यदिह प्रसिद्धं एनत् उक्तान्नं चक्षुषा चक्षुरिन्द्रियेण अग्रहैष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्यवर्ग्गः सर्वोपि जनः ह प्रसिद्धं अन्नं दृष्ट्वैव अत्रप्स्यत् तृप्तोऽभविष्यत्॥ ५ ॥

**तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं।**
**स यद्धैनत् श्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्॥ ६ ॥**

तत् पूर्वोक्तान्नं श्रोत्रेण श्रोत्रेन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् व्रीह्यादेर्लक्षणमन्नं श्रोत्रेण ग्रहीतुं नाशक्नोत्। सः प्रथमजः शरीरी यत् यदिह प्रसिद्धं एनत् उक्तमन्नं श्रोत्रेण श्रोत्रेन्द्रियेण अग्रहैष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्यवर्गोपि सर्वजनः ह प्रसिद्धं अन्नं श्रुत्वैव अन्नवाचकशब्दं श्रुत्वैव अत्रप्स्यत् तृप्तोऽभविष्यत्॥ ६ ॥

**तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं।**
**स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत्॥ ७ ॥**

उक्तमन्नं त्वचा त्वगिन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तमन्नं त्वचा त्वगिन्द्रियेण ग्रहीतुं उपादातुं नाशक्नोत् न समर्थोऽभवत्। सः प्रथमजः शरीरी यत् यदि ह प्रसिद्धं एनत् उक्तमन्नं त्वचा त्वगिन्द्रियेण अग्रहै-ष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्यवर्गोपि सर्वजनः ह प्रसिद्धं अन्नं स्पृष्ट्वैव अत्रप्स्यत् ॥ ७ ॥

**तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम् ।**
**स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥**

तत् पूर्वोक्तान्नं मनसा अंतःकरणेन अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तान्नं मनसा ग्रहीतुं नाशक्नोत् । सः प्रथमजः शरीरी यत् यदि ह प्रसिद्धं एनत् उक्तमन्नं मनसाऽग्रहैष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्यवर्गोपि सर्व-जनः ह प्रसिद्धं अन्नं मनसा ध्यात्वैव अत्रप्स्यत् ॥ ८ ॥

**तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं ।**
**स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥९॥**

तत् व्रीह्यादिलक्षणान्नं शिश्नेन उपस्थेंद्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तान्नं शिश्नेन ग्रहीतुं नाशक्नोत् । सः प्रथमजः शरीरी यत् यदि ह प्रसिद्धं एनत् उक्तान्नं शिश्नेन अग्रहैष्यत् गृहीतवान्स्यात् तर्हि तत्कार्य्य-वर्गोपि सर्वजनः ह प्रसिद्धं विसृज्यैव अन्नं वीर्य्यवत् त्यक्त्वैव अत्रप्स्यत् ॥९॥

एवं तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् पश्चात्—

**तदपानेनाजिघृक्षत् तदावयत् ।**
**सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥**

तत् उक्तमन्नं अपानेन मुखद्वारेणान्तर्गच्छता वायुना अजिघृक्षत् ग्रहीतुमै-च्छत् तत् अन्नं आवयत् जग्राह अशितवानिति यावत् । एवं वायोरन्नग्रहण-साधनत्वं निश्चित्य तद्दार्ढ्यार्थे वायुं प्रशंसति सैष इति । यत् यः वायुः मुख-बिलादन्तश्चारी वायुरस्ति सः उक्तरूपः एषः सर्वजनप्रसिद्धोऽपानः अन्नस्य व्रीह्यादिरूपस्य ग्रहः ग्राहकः यद्वायुः योऽपानसंज्ञको वायुः एषः उक्तलक्षणो-ऽपानः अन्नायुर्वा अन्नद्वाराऽऽयुषो हेतुरेव । यद्वा अन्नमायुर्जीवनं यस्य सो-

ऽन्नायुरिति वै प्रसिद्धं तत्र कौषीतकिनः समामनन्ति। यावद्ध्यस्मिन्शरीरे प्राणो वसति तावदायुरित्यायुष्यहेतुत्वं प्राणस्य सिद्धं॥ १०॥

एवमपानवृत्तिमत्प्राणनिष्ठस्यान्नपानग्रहणलक्षणस्य भोगस्यात्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधाय इदानीं भोगस्वामिनं दर्शयितुं स्रष्टुरीश्वरस्य ईक्षणमाह—

**स ईक्षत कथं न्विदं मदृते स्यादिति। स ईक्षत कतरेण प्रपद्या इति। स ईक्षत यदि वाचाऽभिव्याहृतं। यदि प्राणेनाभिप्राणितं। यदि चक्षुषा दृष्टं। यदि श्रोत्रेण श्रुतं। यदि त्वचा स्पृष्टं। यदि मनसा ध्यातं। यद्यपानेनाभ्यपानितं। यदि शिश्नेन विसृष्टमथ कोऽहमिति॥ ११॥**

इदं देहेन्द्रियदेवतादिकार्य्यजातं मदृते मां पुरस्वामिनं विना कथं नु केन प्रकारेण खलु स्यात् स्थितं भवेत् इति एवं सः प्रकृतः परमेश्वरः ईक्षत ईक्षणं कृतवान्। नहि पुरस्वामिनं विना पुरस्य पुरवासिनां वा रचना शोभते। अतो भोगस्वामिना मया जीवरूपेण देहे प्रवेष्टव्यमित्यर्थः। प्रवेशमार्गे ईक्षणस्वरूपमाह—स ईक्षतेति। द्वावत्र प्रवेशमार्गौ पादाग्रं मूर्ध्नि ब्रह्मरन्ध्रं च तयोर्मध्ये कतरेण केन मार्गेण प्रपद्ये कार्य्यकरणसङ्घातलक्षणं पुरमहं प्रविशानि इति एवं सः परमात्मा ईक्षतेति व्याख्यातं। एवं कथं न्विदमित्यादिवाक्ये जीवरूपप्रवेशस्य देहेन्द्रियादिव्यवहारपालनप्रयोजनमुक्तं इदानीमात्मज्ञानरूपप्रयोजनांतरस्येक्षणमाह—स ईक्षतेति। सः प्रकृतः ईश्वरः इति एवं ईक्षत ईक्षणं कृतवान्। इति किमित्यत आह—यदीति। यदि वाचा वागिन्द्रियेणैव अभिव्याहृतं अभिवदनात्मकं व्यापारं भवेत्। यदि प्राणेन घ्राणेन्द्रियेणैव अभिप्राणितं आघ्रातं भवेत्। यदि चक्षुषा चक्षुरिन्द्रियेणैव दृष्टं दर्शनं भवेत्। यदि श्रोत्रेण श्रोत्रेन्द्रियेणैव श्रुतं शब्दस्य श्रवणं भवेत् यदि त्वचा त्वगिन्द्रियेणैव स्पृष्टं स्पर्शनं भवेत्। यदि मनसा अंतःकरणेनैव ध्यातं ध्यानात्मकव्यापारो भवेत्। यदि अपानेन अपानवायुनैव अभ्यपानितं अन्तर्गतं भक्षितं भवेत्। यदि शिश्नेन उपस्थेन्द्रियेणैव विसृष्टं विसर्जनं भवेत्।

यद्यहं कार्य्यकरणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलमुपलभेयं अथ तदा कोहं किंस्वरूपः कस्य वा स्वामी भवेयं न कोपि। अतोऽस्ति कश्चिद्देहादिव्यतिरिक्तश्चिदात्मा स च परब्रह्मस्वरूप इति न कोपि मां जानीयात्। यदा त्वहमेव सर्वव्यापाराणां कर्ता वागादयस्तु मया प्रेरिताः सन्तोऽभिवदनादिक्रियाः कुर्युः तदा तु वागादिकरणको व्यापारः सकर्तृको भवितुमर्हति। क्रियात्वात्। लोकप्रसिद्धगमनादिक्रियावदिति मत्सद्भावोऽनुमातुं शक्यते। एवमेवानुमानेनात्मसद्भाव उषस्तब्राह्मणेपि समाम्नातः यः प्राणेन प्राणिति स त आत्मा सर्वान्तर इति भावः ॥ ११ ॥

एवं वागादिकरणानां व्यवहारसिद्धये मदवगतये च मयाऽवश्यमत्र प्रवेष्टव्यमिति ईक्षणं कृत्वा—

**स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत। सैषा विदृतिर्नाम द्वास्तदेतन्नांदनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

सः परमेश्वरः पादाग्रमार्गस्य भृत्यसेवितस्य निकृष्टत्वात्परिशेषादुत्तममिदं द्वारं ज्ञात्वा स्रष्टा ईश्वर एतमेव मूर्द्धमध्यभागमेव सीमानं कपालत्रयसन्धिस्थानविशेषं यत्र केशविभागावसानं तत्र देशे विदार्य्य छिद्रं कृत्वा एतया द्वारा छिद्ररूपमार्गेणेमं कार्य्यकरणसंघातं प्रापद्यत ज्ञानशक्तिसहितः शरीरमध्ये प्राविशत्। यस्माज्ज्ञानोपाधिकस्य मूर्द्धमध्ये प्रवेशः तस्मादेव मूर्ध्नि ज्ञानेन्द्रियबाहुल्यमुपलभ्यते। क्रियाशक्त्युपाधिकस्य तु पादाग्रे प्रवेशात्कण्ठादधोभागे कर्मेन्द्रियबाहुल्यमुपलभ्यते। अतो मूर्द्धगतं प्रवेशद्वारं स्तौति सैषेति। सा उक्तलक्षणा एषा सर्वजनप्रसिद्धा द्वाः द्वारं विदृतिर्नाम विदारणात् विदृतिसंज्ञिका इतराणि तु श्रोत्रादिद्वाराणि भृत्यस्थानीयैः श्रोत्रादींद्रियैरधिष्ठितत्वात् साधारणद्वारत्वाच्च न समृद्धानि नानंदहेतूनि परमेश्वरेणैव स्वप्रवेशार्थमसाधारणमिदं द्वारं विदारितं अतोऽस्य द्वारस्योत्कर्षं प्रकटयितुं विदृतिरिति संज्ञा प्रसिद्धा इति भावः। तदेतत् उक्तलक्षणं द्वारं नांदनं एतद्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानंदहेतुत्वेन नांदनमित्यु-

च्यते । शरीरप्रविष्टस्य संचारस्थानानि तेष्ववस्थाविशेषांश्च दर्शयति तस्येति । तस्य शरीरमध्ये प्रविष्टस्यात्मनः त्रय आवसथाः त्रीणि स्थानानि राज्ञ इव क्रीडास्थानानि निर्मितानि त्रयः स्वप्नाः स्वप्नतुल्याः । उक्तावसथत्रयमेव हस्ताग्रेण दर्शयति अयमिति । अयं नेत्रप्रदेशः आवसथः जाग्रदवस्था । अयं कण्ठप्रदेशः आवसथः स्वप्नावस्था । अयं हृदयप्रदेशः आवसथः सुषुप्त्यवस्था । तथा चोक्तं ब्रह्मोपनिषदि । नेत्रस्थं जागरितं विद्यात्कंठे स्वप्नं समादिशेत् । सुषुप्तं हृदयस्थानमिति । यद्यपि सुषुप्तौ ब्रह्मण्येव जीवो वर्त्तते सता सोम्य तदा संपन्न इति श्रुतेः । तथापि ब्रह्मणोपि हृदयाऽऽकाशेऽवस्थानाद्ब्रह्मसंपन्नोपि हृद्येव वर्त्तत इति तथोक्तं । ननु जागरणसुषुप्तयोः स्वप्नान्यत्वेन त्रयः स्वप्ना इत्युक्तिरयुक्ता इति चेन्न । स्वप्नलक्षणस्य तयोरपि सत्त्वात् । विद्यमानवस्तुतत्वं तिरोधाय समुत्पन्नोऽन्यथा प्रतिभास इति स्वप्नलक्षणं तयोरपि वर्त्तते । तत्रापि विद्यमानस्य ब्रह्मतत्वस्य तिरोधानेनाऽन्यथाभूतजीवभावस्य प्रतिभासात् । यद्वा त्रय आवसथा इत्यादिना पितृशरीरमातृशरीरस्वशरीररूपाणि त्रीणि स्थानानि विवक्ष्यंते । तथा चोपरितनाध्याये प्रपंचयिष्यते । संसारो द्विविधः दैनंदिनव्यवहारो जन्मांतरस्वीकारश्चेति । तत्र दैनंदिनव्यवहारस्य नेत्रादिस्थानानि । जन्मांतरस्वीकारस्य पितृमातृस्वीयशरीराणि स्थानानीति विवेकः । इतिशब्दः संसाररूपाध्यारोपप्रकरणसमाप्त्यर्थः ॥ १२ ॥

अध्यारोपमुक्त्वाऽपवादमाह—

**स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती ३ ॥ १३ ॥**

सः देहे प्रविष्टः परमात्मा जातः देहप्रवेशेन जन्ममरणजाग्रत्स्वप्नसुषुप्तिभिः संसारीभूतः सन् कदाचित् गुरुशास्त्रप्रसादेन भूतानि आकाशादीनि प्राणिनश्च अभिव्यैख्यत् सर्वतो विवेकेन ज्ञातवान् । दृश्यमानानि आकाशादिभूतानि प्राणिदेहाश्च कुत उत्पद्यन्ते केन वा रक्षन्ते कस्मिंश्च प्रलीयंते । एवं शास्त्रं विचार्य्य सर्वप्रपंचस्य मायया कल्पितत्वान्न ब्रह्मणोऽतिरिक्तं वस्तुतत्त्वमस्तीत्याह किमिति । इह जगति अन्यं ब्रह्मणो व्यतिरिक्तं वस्तुतत्वं किं

वावदिषत् किं वदिष्यामि । न किंचिदपि ब्रह्मातिरिक्ततया वक्तुं शक्नोमि इति एवं निश्चित्य सः उक्तरूपो जीवः एतमेव देहे प्रविष्टमेव पुरुषं मूर्तद्वारा प्रविश्य पुरिशयानमात्मानं ब्रह्म सत्यज्ञानादिलक्षणं अपश्यत् ज्ञातवान् ब्रह्मस्वरूपत्वेन निश्चितवानिति यावत् । कीदृशं ब्रह्म ततमं तकारलोपः छान्दसः । तततमं अतिशयेन ततं व्याप्तं । दृश्यस्य जगतो द्रष्टुर्जीवस्य च ब्रह्मैव तत्त्वमित्यपवादप्रकरणस्य सर्वस्य तात्पर्य्यार्थः । उक्तं स्वकीयमपरोक्षानुभवं प्रकटयन् तुष्टिं दर्शयति इदमिति । इदमस्तु सन्निकृष्टमित्युक्तेरिदंशब्दोऽपरोक्षवाचको दर्शनक्रियाविशेषणं । इतीइति प्लुतिः परितोषद्योतनार्था । तथा च इदं अपरोक्षं यथा भवति तथा अदर्शं उक्तब्रह्मस्वरूपमहं दृष्टवानस्मि इती अहो कृतकृत्योऽस्मीत्यर्थः ॥ १३ ॥

उक्तसाक्षाद्दर्शनमेव हेतुं कृत्वा तस्य नामनिर्वचनमाह—

**तस्मादिदंद्रो नाम । इदंद्रो ह वै नाम तमिदंद्रं संतमिंद्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रियाइव हि देवाः ॥ १४ ॥**

तस्मात् उक्तापरोक्षदर्शनादेव इदंद्रोनाम इदं दृष्टमितीदंद्र इति नाम प्राप्तवान् । इदंपदपूर्वकदृशधातोड्रट्प्रत्ययांतस्येदंद्रनामनिष्पत्तिर्बोध्या । न केवलं यौगिकमेव परमात्मन इदंद्र नाम भवति किंतु लोके रूढ्यापीत्याह इदंद्र इति । इदंद्रो नाम इदंद्र इति संज्ञा परमेश्वरस्य ह वै लोके प्रसिद्धेत्यर्थः । नन्विन्द्रो मायाभिरित्यादौ परमेश्वरस्य नाम इन्द्र इति प्रसिद्धं नत्विदंद्र इत्याशंक्याह—तमिति । तं परमेश्वरं इदंद्रं सन्तं इदंद्रपदवाच्यं सन्तमपि परोक्षेण परोक्षार्थमक्षरलोपेन इंद्र इति एवं परोक्षाभिधानेन आचक्षते कथयन्ति ब्रह्मविद इति शेषः । परोक्षोक्तेः प्रयोजनमाह—परोक्षप्रिया इति । देवाः पूज्याः परोक्षप्रिया इव परोक्षनामग्रहणे प्रीतिमंत एव भवन्ति हि यस्मादेवं तस्मात् प्राकृता अपि पूज्याः देवदत्तादिस्वकीयं नाम गूढं कृत्वाऽऽचार्य्या उपाध्याया इत्यादिकं परोक्षनामोक्तावेव प्रीतिं कुर्वन्तीति लोकप्रसिद्धिर्दर्शिता । आभ्यासोऽध्यायसमाप्त्यर्थः ॥ १४ ॥ इति तृतीयः खण्डः ॥ ३ ॥

इत्यैतरेये द्वितीयारण्यके चतुर्थोऽध्यायः ॥ उपनिषत्सु प्रथमः ॥

उपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

एवमध्यारोपापवादाभ्यां निष्प्रपंचमात्मतत्वं निरूप्यात्मज्ञानहेतुवैराग्यसिद्ध्यर्थं जीवावस्था बीभत्सरूपाः पूर्वोक्ता आवसथशब्दिता आह—

**पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत् सर्वेभ्योऽगेभ्यस्तेजः सम्भूतम् । आत्मन्येवात्मानं बिभर्त्ति तद्यदा स्त्रियां सिंचत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥**

ह वै प्रसिद्धः अयं मूर्द्धानं विदार्य प्रविश्य स्थितः संसारी पुरुषे पितृशरीरे आदितः प्रथमतः रेतोरूपेण गर्भो भवति । ननु पुरुषशरीरे स्त्रियामिव गर्भो न दृश्यत इत्याशंक्य भक्षितस्यान्नस्य रसादिक्रमेण रेतोरूपेण पुरुषस्य शरीरे विद्यमानस्तस्य स गर्भ इत्युच्यते । तथा च अविद्याकामकर्माभिमानवान् यज्ञादिकर्म कृत्वा अस्माल्लोकाद्धूमादिक्रमेण चंद्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्य व्रीह्याद्यन्नसंश्लिष्टः पुरुषाऽग्नौ हुतः सन् पुरुषदेहे रेतोरूपेण स्थितो भवति । छांदोग्ये अथ ये इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्तीत्यादिना पंचाग्निविद्यायां विस्तरेणायमर्थः प्रसिद्धः । न चायं स्त्रीगर्भवदुदरवृद्ध्याऽभिव्यज्यत इति भावः । यत् प्रसिद्धं एतत् पुरुषशरीरे रसादिक्रमेण परिणतसप्तमधातुरूपं रेतः वीर्य्यमस्ति सः पुरुषे गर्भो भवतीति पूर्वेणान्वयः । तस्य गर्भस्य जन्मप्रकारमाह तदेतदिति । तत् पुरुषे गर्भत्वेनोक्तं एतत् रेतः सर्वेभ्यो निखिलेभ्यः अंगेभ्यः पुरुषावयवेभ्यः तेजः संभूतं सारभूतं निर्गतं भवति । आत्मानं स्वस्यैव रूपांतरभूतं रेतः आत्मन्येव स्वशरीर एव बिभर्ति पुरुषो धारयति पोषयति वा । तत् पोषितं रेतोऽग्निसंपर्केण घृतमिव कामाग्निना विलीनं हृदि समागत्य स्थितं सत् यदा ऋतुकाले स्त्रियां सिंचति स्त्रीयोनौ गर्भाशये स्थापयति अथ तदा एनत् जीवांतराविष्टं रेतोरूपं शरीरं जनयति उत्पादयति तत् पुरुषशरीराद्बहिर्गमनं स्त्रीयोनौ रेतोनिःसरणं भवति अस्य रेतसि स्थितस्य जीवस्य प्रथमं जन्म। तस्य त्रय आवसथा इत्युक्तानां मध्ये प्रथमावस्थाऽभिव्यक्तिर्भवतीति शेषः ॥ १ ॥

ननु स्त्रीदेहे प्रविष्टं परकीयरेतो दुःखप्रदं स्यात् शरीरे संलग्नबाणवदित्याशंक्याह—

**तत्स्त्रिया आत्मभूयं गच्छति। यथा स्वमंगं तथा तस्मादेनं न हिनस्ति। साऽस्यैतमात्मानमत्र गतं भावयति ॥ २ ॥**

तत् स्त्रीयोनौ प्रविष्टं पुरुषरेतः स्त्रियाः स्वजायायाः आत्मभूयं स्वशरीरभावं गच्छति प्राप्नोति। तत्र दृष्टान्तमाह यथेति। यथा येन प्रकारेण स्वमंगं स्वकीयकरचरणादिरूपांगं स्वशरीरात् भिन्नं न भवति तथा तद्वत्। तस्मात् स्वशरीरत्वेनैकीभावात् एनां मातरं स गर्भो न हिनस्ति उदरे संलग्नबाणवत् न हंति। तद्गर्भधारणद्वारेण स्त्रीपुरुषयोः परस्परमुपकार्य्योपकारकभावं दर्शयति साऽस्येति। सा अंतर्वत्नी स्त्री अस्य रेतःसेक्तुः पुरुषस्य एतं प्रसिद्धं आत्मानं पुत्ररूपं अत्र स्वशरीरे गतं प्रविष्टं भावयति पथ्यान्नादनादिना पालयति ॥ २ ॥

**सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति ॥**

सा गर्भधारिणी स्त्री यतः भावयित्री गर्भपालनेन स्वभर्तुरेव पालयित्री ततएव भावयितव्या पत्याऽप्यभीष्टान्नपानवस्त्रादिप्रदानेन पालयितव्या भवति। स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारकत्वं दर्शयति तमिति। तं पूर्वोक्तं गर्भं कुक्षिस्थमर्भकं स्त्री अंतर्वत्नी बिभर्ति अत्यन्तं प्रयासं सोढ्वा नव वा दश वा मासान्स्वोदरे धारयित्वा पोषयति। एवं मातृुपकारं प्रदर्श्य पितृुपकारं दर्शयति स इति। अग्रेऽग्रेऽधीति पदत्रयेण जन्मनः पूर्वं जन्मकालं जन्मन उत्तरकालमिति कालत्रयमुच्यते। तथा च सः पिता अग्रे एव जन्मनः प्रागेव सीमन्तादिसंस्कारेण जन्मनोऽग्रे प्रसवकालादव्यवहितपूर्वक्षणे सुखप्रसवार्थं मंत्रजलप्रोक्षणादिना अधि प्रसवादुत्तरकाले कुमारं जातमर्भकं जातकर्मादिसंस्कारेण भावयति पालयतीत्यर्थः ॥ ३ ॥

पुत्रसंस्कारेण पितुरप्युपयोगमाह—

**स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव**

**तद्भावयत्येषां लोकानां संतत्या एवं संतता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥**

सः पिता यत् येन शास्त्रोक्तसंस्कारेण जन्मनोऽग्रे पूर्वं अधि जन्मन उत्तरकाले कुमारं जायमानं पुत्रं भावयति । तत् तेन संस्कारेण आत्मानमेव स्वशरीरमेव भावयति पुत्रस्य स्वदेहरूपत्वात् । तथा चोक्तं 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरं । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' इति । मोक्षप्रकरणे पुत्रोत्पादनस्य विधानात्पुत्रोत्पादनं मोक्षसाधनमिति भ्रमं वारयति एषामिति । एषां सर्वजनप्रसिद्धानां लोकानां लोकसाधनीभूतानां पुत्रपौत्रादीनां संतत्यै अविच्छेदाय पुत्रोत्पादनादिविधानं न मोक्षायेत्यर्थः । हि यस्मात् एवं पित्रा स्वोत्पादिते पुत्रे संस्कृते सति तथा पुत्रोप्यन्यं पुत्रमुत्पाद्य संस्करोति सोप्यन्यं पुत्रमित्यनेन प्रकारेण इमे पुत्रपौत्रादयः लोकाः लोकसाधनीभूताः सन्तताः विच्छेदरहिताः भवन्तीति शेषः । अन्यथा विच्छिद्येरन् । एवं प्रसंगाद्गर्भधारणविधिमुक्त्वा प्रकृतं वैराग्यार्थं द्वितीयं जन्म दर्शयति तदस्येति । तत् पुत्ररूपेण मातृशरीरान्निर्गमनरूपं अस्य जीवस्य संसारिणः द्वितीयं जन्म पूर्वोक्तरेतोरूपजन्मापेक्षया द्वितीयावस्थाऽभिव्यक्तिर्भवतीत्यर्थः ॥ ३ ॥

पितुरपि पुत्रप्रयुक्तमुपयोगं दर्शयति—

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयतेऽथास्याऽयमितर आत्मा कृतकृत्यो वयो गतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ ४ ॥**

द्वावात्मानौ भवतः स्वदेहः पुत्रदेहश्चेति । तयोर्मध्ये अस्य पितुः सः पूर्वोक्तः अयं प्रत्यक्षः आत्मा पुत्रदेहः पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः अग्निहोत्रादिभ्यः शास्त्रविहितकर्मनिष्पादनार्थं प्रतिधीयते पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधित्वेन स्वगृहे स्थाप्यते । ननु किमर्थं पुत्रं प्रतिनिदधाति स्वयमेव तत्कर्म कुतो न करोतीत्याशंक्य स्वस्य मरणात्कर्तुमशक्त्येत्यभिप्रायेणाह— अथेति । अथ प्रतिनिधिकरणानन्तरं अस्य पितुः अयं नेत्रगोचरः इतरः पुत्रदेहाद्भिन्नः पितृशरीररूप आत्मा स्वकीयः स्थविरो देहः कृतकृत्यः कृतान्ये-

तज्जन्मप्रयुक्तकृत्यानि कर्तव्यानि कुटुंबपोषणादीनि लौकिकानि अग्निहोत्रादीनि च शास्त्रीयाणि कर्माणि येन सः कृतकृत्यः। यद्वा कर्तव्याद्दणत्रयाद्विमुक्तः सः वयोगतः वयसा पूर्वकर्मसंपादिताऽऽयुषाहीनः सन् प्रैति म्रियते। सः वृद्धः पिता इतः अस्माज्जीर्णदेहात् प्रयन्नेव निर्गच्छन्नेव पुनः भूयः जायते स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेणोत्पद्यते। प्रयन्नेवेत्यत्रैवकारेणास्माद्देहान्निर्गतस्य देहांतरग्रहणे कालव्यवधानाभावो द्योतते। अस्मिन्नेव देहे स्थित्वा मानसं देहान्तरं स्वीकृत्यैव पश्चादमुं देहं त्यजति। तत्र दृष्टान्तः यथा तृणजलूका तृणांतरमग्रभागेनावष्टभ्य पृष्ठभागमुपसंहरति तद्वत्। तत् शरीरांतरग्रहणरूपं अस्य मृतस्य पितुः तृतीयं जन्म उक्तजन्मद्वयापेक्षया तृतीयं जन्मेत्युच्यते। यद्यपि पूर्वं पुत्रस्य जन्मद्वयमुक्तं तृतीयं जन्मापि पुत्रस्यैव वक्तुं युक्तं नतु पितुः शरीरस्य तृतीयं जन्म। तथापि पितापुत्रयोरैकात्म्यस्य विवक्षया तृतीयं जन्मेत्युक्तं। यद्वा पितृमातृभ्यां पुत्रस्य यज्जन्मद्वयमुदाहृतं। तेनैव प्रकारेण पितुरपि स्वपितृभ्यां जन्मद्वयमर्थादुक्तं भवति तदपेक्षया पितुरिदं तृतीयं जन्म। पुत्रस्याप्युक्तजन्मद्वयापेक्षया तस्य मरणादूर्ध्वं तृतीयं जन्म भविष्यतीति न काप्यनुपपत्तिः। एवं सर्वस्य जन्मत्रयस्य पुनःपुनरावर्तनोपवर्णनेन संसाराद्विरक्त्युत्पत्तिः सूचिता। न हि पितृशरीरेऽत्यन्ताशुचिरेतोरूपेणावस्थानं ततः शिश्नछिद्रान्निर्गमनं ततो मातुरुदरे मलमूत्राक्रान्ते विष्ठाकृमिवदवस्थानं ततो योनिद्वारा निर्गमनं चेत्यत्यन्तकष्टं उक्तान्निरन्तरमलरूपशरीरधारणादन्यदधिकं जुगुप्सितं किञ्चिद्वैराग्यकारणं वक्तुं शक्यते। तथा चोक्तं विष्णुपुराणे। 'स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्। वैराग्यकारणं तस्य किमन्यदुपदिश्यते' इति॥ ४॥

पूर्वोक्तस्य जुगुप्सितसंसारस्य ज्ञानमंतरेण विनाशाभावं तत्वज्ञानेन तन्निवृत्तिं च दर्शयितुं मन्त्रमुदाहरति—

**तदुक्तमृषिणा गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति। गर्भ एवैतच्छयानो वामदेव एवमुवाच॥ ५॥**

तत् पुरुषे ह वा अयमादित इत्यारभ्य तृतीयं जन्मेत्यन्तेन ग्रन्थेन । संसारे यत्कष्टमुक्तं यच्च संसारनिवर्तकं तत्वज्ञानमुत्तरत्र विवक्षितं तदुभयमर्थजातं ऋषिणा मन्त्रेणाप्युक्तं कथितं । तमेव मन्त्रं पठति गर्भेन्विति । अहं वामदेवः गर्भे नु मातृगर्भाशय एव सन् वसन् एषां अग्निवाय्वादित्यादीनां देवानां वागाद्यधिष्ठातृदेवानां विश्वा विश्वानि सर्वाणि जनिमानि मुखाद्वाग्वाचोऽग्निरित्यादिपूर्ववाक्येनोक्तानि परमात्मकृतानि जन्मानि अन्वऽवेदं अनुक्रमेण ज्ञातवानस्मि । औपनिषदमात्मज्ञानं मम संपन्नमित्यर्थः । अधः आत्मज्ञानोदयात्पूर्वं मा मां वामदेवं आयसीः लोहनिर्मितशृंखलासमानाः शतं पुरः शतसंख्याकानि शरीराणि अरक्षन् कारागृहे स्थापितं तस्करमिव बद्धं चक्रुः । इदानीं तु श्येन इव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मीत्यर्थः । इतिशब्दो मंत्रसमाप्त्यर्थः । मंत्रद्रष्टुर्नामनिर्देशपूर्वकमुक्तमंत्रस्य तात्पर्यं गर्भएवैतदित्यादिब्राह्मण आह गर्भ इति । गर्भे एव मातृकुक्षावेव शयानः स्थितः सन् एतत् पूर्वोक्तमंत्रं वामदेवऋषिरेवं मंत्रोक्तप्रकारेण उवाच उक्तवानित्यर्थः । यद्यपि मातृगर्भे श्रवणादिज्ञानसाधनसामग्री नास्ति तथापि पूर्वजन्मकृतश्रवणादिसामग्रीवशादेव प्रतिबन्धनिवृत्तौ सत्यां गर्भेपि ज्ञानोत्पत्तिः संभवतीति भावः ॥ ५ ॥

एवं यथोक्तात्मज्ञानस्याव्यभिचरितफलत्वज्ञापनाय वामदेवेन ज्ञानफलं प्राप्तं दर्शयति—

**स एवं विद्वान् अस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ६ ॥**

सः वामदेवः एवं मंत्रोक्तप्रकारेण विद्वान् आत्मतत्वं विजानन् प्रारब्धकर्मक्षये सत्यस्माच्छरीरभेदात् वर्तमानदेहविनाशात् ऊर्ध्वः सर्वस्योपरितनः परब्रह्मस्वरूपः सन् उत्क्रम्य अधोभावात्संसारान्निवृत्तिं प्राप्य अमुष्मिन् इंद्रियागोचरे स्वर्गे निरतिशयब्रह्मानंदे लोके स्वप्रकाशस्वरूपे सर्वान्कामान् तैत्तिरीयोपनिषदुक्तान् सार्वभौमादिहिरण्यगर्भपर्यंतान् आनंदान् आप्त्वा क्षुद्रानंदानां पूर्णानंदेऽतर्भावात् परमानंदस्वरूपब्रह्मात्मत्वेन प्राप्य अमृतः तत्वज्ञानिनो वर्तमानदेहपातादूर्ध्वं देहांतरसंबन्धाभावेन देहप्राणवियोगलक्षणमरणरहितः सम-

भवत् संबभूव। द्विर्वचनं सफलस्य वामदेवात्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम् ॥
इति चतुर्थः खंडः ॥ ४ ॥

इत्यैतरेये द्वितीयारण्यके पंचमोऽध्यायः ॥ उपनिषत्सु द्वितीयः ॥

---

अथोपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

पूर्वं चतुर्थाध्यायेऽध्यारोपप्रकारेण तस्य त्रय आवसथा इत्यादिवाक्ये पितृमातृस्वशरीररूपं संसरणार्थं स्थानत्रयं यदुक्तं । स जातो भूतान्यभिव्यैख्यदित्यादिनापवादप्रकरणेन यत्तत्वज्ञानं प्रदर्शितं । पुनः पंचमाध्याये पुरुषे ह वा इत्यादिना वैराग्योत्पत्त्यर्थं यत्प्रपंचितं । यच्च वामदेवोदाहरणेन ज्ञानं तत्फलं च संक्षिप्य प्रदर्शितं । तत्सर्वं विशदीकर्तुं षष्ठाध्याय आरभ्यते । तत्रापि पुरुषे ह वा अयमादितो गर्भो भवतीत्यादिवाक्येन जन्मत्रयरूपसंसारदुःखनिरूपणेन वैराग्यं निरूपितं ज्ञानोत्पत्त्यर्थं । तत्त्वंपदार्थशोधनपूर्वकं वाक्यार्थज्ञानं विना वैराग्यमात्रेण ज्ञानोत्पत्तिर्न संभवति । अतः पदार्थशोधनपूर्वकं वाक्यर्थज्ञानं परस्परविचारेणाधिकारिणं च दर्शयन् वाक्यमवतारयति—

**कोऽयमात्मेति वयमुपास्महे । कतरः स आत्मा येन वा रूपं पश्यति । येन वा शब्दं शृणोति येन वा गंधानाजिघ्रति । येन वा वाचं व्याकरोति । येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥**

अयं अहंप्रत्ययविषयः आत्मा आत्मशब्दवाच्यः इति एवं अयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत् तमेव वयं आत्मतत्वजिज्ञासवः उपास्महे व्यवहरामः । क आत्माऽस्तीति जिज्ञासापूर्वकं परस्परं पृच्छंति । एवं सामान्यतो विचारं प्रदर्श्य विशेषतस्तं दर्शयति कतर इति । आत्मा वा इदमेक एवाग्र आसीदित्यादिश्रुतौ निरुपाधिकः कश्चिदात्मा श्रूयते स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यतेति श्रुतौ च सोपाधिकः कश्चिदात्मा श्रूयते । तयोर्मध्ये सः 'आत्मा वा' इत्यादिना श्रुतः । आत्मा प्रत्यक्चैतन्यरूपः कतरः कोऽस्ति । सोपाधिको निरुपाधिको वेत्यर्थः । ननु कतरः स आत्मेत्ययं विचारोऽस्तु । श्रुत्यैकगम्यस्य तस्य विचारंविनाऽनिश्चयात् । कोऽयमात्मेति विचारस्तु न युक्तः तस्याहंप्रत्ययगम्यत्वेन सर्वजनप्र-

सिद्धत्वादित्याशंक्य विचारस्य हेतुभूतमनेककोट्यात्मकं संशयमाह येनेति। यद्यप्यहंप्रत्ययगम्यश्चैतन्यरूप आत्मेति सामान्यरूपेण प्रसिद्धिरस्ति । तथापि तद्विशेषस्वरूपे संशयोऽस्त्येव । जलपात्रेषु प्रत्येकं सूर्य्यादिप्रतिबिंबाभिव्यक्तिवत् । बाह्यांतःकरणेषु सर्वेष्वपि पृथक् पृथक् चैतन्याभिव्यक्तेः सत्त्वात् । तथा च येन वा चक्षुरिंद्रियाभिव्यक्तचैतन्येन देहेंद्रियादिसंघाताभिमानी लौकिकः पुरुषो रूपं पश्यति नीलपीतादिरूपमवलोकयति तच्चैतन्यं किमात्मेत्येका कोटिः । तथा येन वा श्रोत्रेंद्रियाभिव्यक्तचैतन्येन शब्दं शृणोति शब्दमनुभवति किंवा स आत्मेति द्वितीया कोटिः । तथा येन वा घ्राणेंद्रियाभिव्यक्तचैतन्येन गंधान् सुरभ्यसुरभिरूपान् आजिघ्रति गंधं गृह्णाति किंवा स आत्मेति तृतीया कोटिः । तथा येन वा वागिंद्रियाभिव्यक्तचैतन्येन वाचं शब्दात्मिकां वाणीं व्याकरोति गौरश्व इत्येवं साध्वसाध्विति च अभिवदति किंवा स आत्मेति चतुर्थी कोटिः । तथा येन वा रसनेंद्रियाभिव्यक्तचैतन्येन स्वादु चास्वादु च मधुरकटुकाद्यात्मकं रसं विजानाति साक्षात्करोति किंवा स आत्मेति पंचमी कोटिः । चैतन्येनैव रूपरसाद्यभिव्यक्तिः कठवल्लिष्वपि समाम्नायते येन रूपं रसं गंधं शब्दान् स्पर्शांश्च मैथुनान् एतेनैव विजानातीति ॥ १ ॥

एवं बाह्येन्द्रियाभिव्यक्तचैतन्येष्वात्मसंशयं प्रदर्श्य उभयविधांतःकरणतद्वृत्तिविशेषाभिव्यक्तचैतन्येष्वात्मसंशयाभिप्रायेण यदेतद्धृदयमित्यादिवाक्यसंदर्भेण तत्तदुपाधिस्वरूपमुपन्यस्यते—

**यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुः । असुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥**

यदेतत् प्रसिद्धं हृदयं निश्चयात्मिका बुद्धिः मनश्च संकल्पादिसाधनभूतं । बुद्धिमनसोरुभयोरंतःकरणविशेषयोः समुच्चयार्थो मनश्चेति चकारः । बुद्धिमनोरूपस्यांतःकरणस्य वृत्तिविशेषाः । एतत्संज्ञानमित्यादिना प्रपंच्यते । एतत् उक्तलक्षणमन्तःकरणं वृत्तिरूपेण परिणतं सत् संज्ञानं सम्यगिदं

वस्तु इति ज्ञप्तिः संज्ञानं । यद्वा यया वृत्त्या चेतन इत्युच्यते जंतुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनीति संज्ञानं । आज्ञानं आज्ञप्तिरीश्वरभावः । विज्ञानं इदमस्माद्विशिष्टमित्येवमादिविवेकः शिल्पादिकलाज्ञानं वा विज्ञानं । प्रज्ञानं प्रज्ञप्तिः तात्कालिकप्रतिभासवतीत्यर्थः । मेधा श्रुतग्रंथार्थधारणाशक्तिः । दृष्टिः चक्षुरादीन्द्रियद्वारा सर्वविषयोपलब्धिहेतुर्मनोवृत्तिः । धृतिः धारणं अवसन्नानां शरीरेंद्रियाणां ययोत्तंभनं भवति । मतिः मननं राजकार्य्याद्यालोचनं । मनीषा तत्र स्वातंत्र्यं मनस ईषा मनीषेतिव्युत्पत्तेः । जूतिः रोगादिजन्यदुःखाकारवृत्तिः । स्मृतिः अनुभूतस्य .वस्तुनः स्मरणं । संकल्पः सामान्येन ज्ञातानां रूपादीनां शुक्लत्वादिविशेषरूपेण सम्यक्कल्पनं । क्रतुः इदमवश्यं करिष्यामीत्यध्यवसायः । असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामः असंनिहितविषयाकांक्षा तृष्णा । वशः स्त्रीसंपर्केच्छा इति एवमाद्या अन्याश्चान्तःकरणवृत्तयः सात्विकादीनां विचक्षणैर्द्रष्टव्याः । तथा च येन वा रूपं पश्यतीत्यादि मनश्चैतदित्यन्तं प्राणस्य करणत्वेनाऽनात्मत्वार्थमुक्तं । संज्ञानमित्यादि वशइत्यन्तमन्तःकरणवृत्तिद्वारा तद्व्यतिरिक्त आत्मा उक्त इति भावः । तत्रापि किमेतद्धृदयाद्युपहितचैतन्यमात्मा किंवा एतत्संज्ञानाद्युपहितचैतन्यमात्मेत्येवं सर्ववृत्त्युपहितचैतन्येष्वात्मसंशयो योजनीयः । एवमात्मसंशयमुक्त्वा तन्निवर्तकं त्वंपदार्थस्य निर्णयमाह—सर्वाण्येवैतानीति । एतानि येन वा रूपमित्यादिना वशइत्यन्तेन ग्रन्थेन सर्वाणि निखिलानि प्रज्ञानस्यैव अत्र प्रज्ञानशब्देन पूर्ववत्तात्कालिकप्रतिभा वृत्तिरूपा नोच्यते किंतु शुद्धचैतन्यमेव । तथा च प्रकृष्टं ज्ञानं प्रज्ञानं तस्य प्रज्ञानस्यैव तत्तद्वृत्त्युपाधिद्वारा उपलक्षितस्य शुद्धचेतनस्यैव नामधेयानि नामवाचकानि भवन्ति सम्पद्यन्ते । न तु स्वतः । स्वतस्तु शुद्धचैतन्यमेवाऽविद्यादिमलरहितत्वात्प्रकृष्टं सदुपाधिसंपर्कादपकृष्टमिव प्रतिभाति । यदा तूपाधिविशिष्टत्वं परित्यज्य तत्तदुपाधिभिरुपलक्षितं चैतन्यं शाखाचन्द्रन्यायेन विविच्यते । तदानीमुपाधिकृतापकर्षस्याभावात्प्रकृष्टमिव परिशिष्यते । तच्च प्रकृष्टं शुद्धचैतन्यमेव सर्ववृत्त्युपाधिष्वनुगतमिति कृत्वा तस्य प्रज्ञानस्यैव मुख्यमात्मत्वमिति निर्णयः । तथा च कोऽयमात्मेति वयमुपास्महे एवमात्मतत्वं जिज्ञासूनां परस्परं पूर्वप्रकारेण प्रश्ने सत्येतस्मिंस्त्वंपदार्थविचारे तत्तद्वृत्त्युपहितसाक्षिचैतन्यं त्वंपदलक्ष्यस्वरूपः प्रज्ञा-

नशब्दाभिधेयो निरुपाधिक आत्मैव नैरंतर्येणोपास्य इति परस्परं निर्णये सिद्धो भवतीति भावः ॥ २ ॥

इदानीं तत्पदार्थविचारे आत्मनिर्णयं दर्शयति—

**एष ब्रह्मैष इंद्रः। एष प्रजापतिरेते सर्वे देवा इमानि च पंचमहाभूतानि पृथिवीवायुराकाश आपोज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चांडजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जंगमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा ॥**

एषः हिरण्यगर्भः समवर्तताग्र इत्यादिशास्त्रप्रसिद्धः प्रथमशरीरी विवक्षितः। ब्रह्मा समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भाख्यः । एषः शास्त्रप्रसिद्धः इन्द्रः देवराजः । एष शास्त्रप्रसिद्धः समष्टिस्थूलशरीराभिमानी प्रजापतिः विराडात्मा । एते पूर्वोक्तलक्षणाः अग्निवाय्वादयः सर्वे निखिला देवाः वागाद्यधिष्ठातृदेवताः । इमानि प्रसिद्धानि पञ्चमहाभूतानि पञ्चस्थूलभूतानि । पञ्चमहाभूतानीत्यस्यैव विवरणं पृथिवीत्यारभ्येत्येतानीत्यन्तं इत्येतानि एतत्पदप्रतिपाद्यानि । इमानि प्रसिद्धानि क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मशकपिपीलिकादिभिः मिश्राणि युक्तानि मनुष्यादीनि शरीराणि । इवशब्दोऽनर्थकः । बीजानि स्वस्वसजातिदेहानां हेतुभूतानि । तेषामेव नानाजातीयत्वं दर्शयति इतराणि चेतराणि च परस्परविलक्षणानि च । परस्परविलक्षणत्वमेवाह—अंडेति । अंडजानि च अंडाज्जातानि पक्षिसर्पादीनि । जारुजानि च जरायुजानि मनुष्यगवादीनि । स्वेदजानि च स्वेदाज्जातानि कृमियूकादीनि च । उद्भिज्जानि च वृक्षादीनि च । उक्तानेवांडजादीनुदाहृत्य दर्शयति अश्व इति। अश्वा गावः पुरुषा हस्तिन इति स्पष्टार्थकः । उक्तानामनुक्तानां च संग्रहार्थमाह—यत्किंचेति । यत्किंचेदं अन्यदपि यत्किंचित् दृष्टिगोचरं । प्राणि जंगमं पद्भ्यां गमनशीलं प्राणिजातं । पतत्रि च यच्च पतत्रि आकाशेन पतनशीलं । यच्च प्रसिद्धं स्थावरं स्वतश्चलनशून्यं वृक्षपाषाणा-

दिकं। उक्तचकाराः परस्परविलक्षणत्वद्योतका भवन्तीत्यर्थः। तत् उक्तरूपं सर्वं हिरण्यगर्भादिस्थावरान्तं प्रज्ञानेत्रं प्रज्ञप्तिः प्रज्ञा सजात्यादित्रिविधभेदशून्य-स्वप्रकाशस्वरूपं ब्रह्म नीयते सत्तां प्राप्यते सर्वमनेनेति नेत्रं प्रज्ञा नेत्रं यस्य हिर-ण्यगर्भादिस्थावरांतसर्वजगतः तदिदं प्रज्ञानेत्रं। प्रज्ञानेत्रमित्यनेन संक्षेपेणोक्तं उत्पत्तिस्थितिलयकारणत्वमेव विवृणोति प्रज्ञाने प्रतिष्ठितमिति। प्रज्ञाने ब्रह्मणि प्रतिष्ठितं शुक्तौ रजतमिव पूर्वोक्तं सर्वं जगदारोपितं। एतेनोत्पत्ति-हेतुत्वमुक्तं। लोकः चराचरात्मकः प्रपञ्चः प्रज्ञानेत्रः प्रज्ञा चैतन्यमेव नेत्रं व्यवहारकारणं यस्य सः प्रज्ञानेत्रः। एतेन स्थितिहेतुत्वमुक्तं। प्रज्ञाप्रतिष्ठा प्रज्ञायां चैतन्ये प्रतितिष्ठिति प्रलयकाले सर्वं जगल्लीयते इति प्रज्ञाप्रतिष्ठा चैतन्यं सर्वस्य जगतो लयस्थानं। एतेन लयकारणत्वमुक्तं। एतावता च। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति यत्प्रयंत्यभि-संविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति तैतिरीयके प्रसिद्धं जगज्जन्मस्थितिलय-कारणाख्यं ब्रह्मणस्तटस्थलक्षणमुक्तं भवति॥

पूर्वं विचारद्वयेन संशोधितयोस्तत्त्वंपदार्थयोः स्वरूपमुक्तं। इदानीं महा-वाक्यार्थमाह—

**प्रज्ञानं ब्रह्म॥ ३॥**

प्रज्ञानं कोऽयमात्मेत्यारभ्य सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ती-त्यन्तेन वाक्येन निर्णीतं देहेन्द्रियादिसाक्षि त्वंपदार्थलक्ष्यस्वरूपं चैतन्यं ब्रह्म एष ब्रह्मेत्यारभ्य प्रज्ञा प्रतिष्ठेत्यन्तेन वाक्येन जगत्कारणत्वेन निर्णीतं पर-ब्रह्मस्वरूपमेव न ह्यनयोरौपाधिकभेदमन्तरेण वस्तुतो भेदोऽस्ति। उभयो-र्निर्विशेषचिद्रूपत्वाविशेषादित्यर्थः। तथा च प्रज्ञानं ब्रह्मेति महावाक्येन जीव-ब्रह्मणोरैक्यमुक्तं मुमुक्षुणा गुरुद्वारा महावाक्यार्थं श्रुत्वा नैरन्तर्येण चिन्तयि-तव्यमिति भावः॥ ३॥

इदानीमुक्तब्रह्मात्मैक्यविदः फलमाह—

**स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् समभवत्। इत्योम्॥ ४॥ इति पंचमः खण्डः॥ ५॥ ६॥ ३॥**

यः कश्चनान्योऽपि वामदेववत्पुरुषः येनैव प्रज्ञेनात्मना ब्रह्म विद्वांसः पूर्वे अमृता अभूवन्नेतेनैव प्रज्ञेनात्मना प्रज्ञानेनात्मना प्रत्यक्चैतन्यस्वरूपेण यथोक्तं ब्रह्म वेद सः विद्वान् अस्माल्लोकात् वर्त्तमानात् देहात् उत्क्रम्य उत्क्रमणं कृत्वा नतु पक्षिणो नीडादिवोर्ध्वगमनं कृत्वा । किंतु देहात्मभावत्यागेन प्रज्ञानात्मना उत्क्रम्य स्थित्वा अमुष्मिन् इंद्रियागोचरे स्वर्गे स्वस्वरूपसुखे लोके स्वप्रकाशात्मके ब्रह्मणि सर्वान्कामान् मनुष्यानन्दादिहिरण्यगर्भानन्दान्तान्सर्वानानन्दान् आप्त्वा परमानन्दस्वरूपब्रह्मात्मत्वेन प्राप्य अमृतः वर्तमानदेहपातादूर्ध्वं देहान्तरसम्बन्धाभावेन देहप्राणवियोगलक्षणमरणरहितः समभवत् संबभूव । समभवदिति द्विरुक्तिरध्यायपरिसमाप्त्यर्था । उक्तमात्मतत्वमंगीकारवाचिना ॐकारेण स्वानुभवप्रकटनेन दृढीकुर्वन्नाह इत्योमिति । ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति स्मृतेरोङ्कारेण ब्रह्मानुसन्धानलक्षणं मङ्गलं कर्तुमोमित्युक्तं ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥

इत्यैतरेये द्वितीयारण्यके षष्ठोऽध्यायः ॥ उपनिषत्सुतृतीयोऽध्यायः ॥ ३ ॥

एवमध्यायत्रयेण तत्वविद्यां परिसमाप्य इदानीमुक्तविद्यानिर्विघ्नपरिसमाप्त्यर्थं शान्तिकरो मन्त्रः पठितः—

**वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितमाविरावीर्मएधि । वेदस्य म आणीस्थः श्रुतं मे माप्रहासीरनेनाधीतेनाऽहोरात्रान्संदधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥**

मे मम वाक् यथोक्ततत्वविद्याप्रतिपादकग्रंथपाठे प्रवृत्तं वागिन्द्रियं मनसि अन्तःकरणे प्रतिष्ठिता । मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठतु । मे मम मनः अंतःकरणं वाचि प्रतिष्ठितं यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते एवमन्योऽन्यानुगृहीते वाङ्मनसी विद्यार्थं ग्रन्थं साकल्येनावधारयितुं शक्नुतः । मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रमत्तप्रलापादिवद्यत्किंचिदसंगतं ब्रूयात् । तथा वाचः पाट-

32

वाभावे सति गद्गदरूपया वाचा विवक्षितं यथावन्नोच्चार्य्यते । अतः तयोः परस्परानुकूल्यमस्त्वित्येवं प्रार्थ्यते । आविःशब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते । हे स्वप्रकाश ब्रह्मचैतन्यात्मन् मे मदर्थं आविः ऐधि अविद्याऽऽवरणापनयनार्थं प्रकटी भव । हे वाङ्मनसे मे मदर्थं वेदस्य उक्ततत्वविद्याप्रतिपादकग्रंथस्य आणीस्थः आनयनसमर्थे भवतां । मे मया श्रुतं गुरुमुखादधीतं ग्रन्थं तदर्थजातं च मा प्रहासीः मापरित्यजतु विस्मृतं माभूदिति यावत् । अनेन विस्मरणरहितेन अधीतेन गुरुमुखात् श्रुतेन ग्रन्थेन अहोरात्रान् अहनि रात्रौ च सन्दधामि संयोजयामि आलस्यं परित्यज्य अधीतं ग्रंथं निरन्तरं पठामीत्यर्थः । ऋतं अस्मिन् पठिते ग्रंथे परमार्थभूतं वस्तु वदिष्यामि कथयिष्यामि विपरीतार्थवदनं कदाचिदपि माभूदित्यर्थः । तथैव सत्यं व्यावहारिकं यथाभूतमर्थं वदिष्यामि नतु विपरीतार्थं वदनं कदाचिदपि । यद्वा ऋतं मानसिकं सत्यं वाचिकं मनसा वस्तुतत्वं विचार्य्य वाचा वदिष्यामीत्यर्थः । तत् मया वक्ष्यमाणं ब्रह्मतत्वं मां शिष्यं अवतु सम्यग्बोधेन पालयतु । तथा तत् ब्रह्मतत्वं वक्तारं आचार्य्यं अवतु बोधकत्वसामर्थ्यप्रदानेन पालयतु । एवं साधनकाले शिष्याचार्य्ययोः श्रोतृत्ववक्तृत्वशक्तिप्रदानविषयां प्रार्थनामुक्त्वा फलकाले फलसिद्धिः पुनरपि प्रार्थ्यते। अवतु मामवतु वक्तारं तत्र शिष्यस्याऽविद्यातत्कार्य्यनिवृत्तिः फलं । आचार्य्यस्य तु तादृशशिष्यदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तपरितोषः फलं । अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबंधका विघ्नाः परिह्रियन्ते विद्योत्पत्तेरूर्ध्वं त्वऽसंभावनाविपरीतभावनारूपा विघ्नाः परिह्रियन्ते। अवतु वक्तारमित्यभ्यास आदरार्थः । द्वितीयारण्यकसमाप्त्यर्थश्च । शान्तिशब्दस्य त्रिरुक्तिस्तु आध्यात्मिकाधिदैविकाधिभौतिकरूपत्रिविधविघ्नप्रशान्त्यर्था ॥

श्रीमदमरदासाङ्घ्रिसेवनाल्लब्धसद्धिया ।
श्रीमदमरदासेन कृता व्याख्या मणिप्रभा ॥

इति श्रीमदुदासीनवर्य्यामरदासपदपद्ममकरन्दतृप्तमानसेन श्रीमदमरदासाख्येन विरचिता ऐतरेयोपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्ता । ॐतत्सद्ब्रह्म ॥



ॐ तत्सद्ब्रह्मणे नमः

# अथ छान्दोग्योपनिषत् ।

## मिताक्षराटीकासमलंकृता ।

योऽनंतोनंतशक्तिः सृजति जगदिदं पालयत्यंतरात्मा
यो विश्वांते निपीय स्वकमहिमगतः सत्यचिन्मूर्त्तिरास्ते ॥
योऽनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥ १ ॥
यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म संतापिनः ॥
यत्संसारपरिश्रमापहृदयासंशीतलामोदभा-
ग्वंदे तत्पुरुषोत्तमाश्रमगुरोः पादारविंदद्वयं ॥ २ ॥
कृत्वा छांदोग्यनाम्न उपनिषदो विज्ञगोचरां टीकां ।
भूयोऽल्पबुद्धिगम्यां नित्यानंदो मिताक्षरां कुर्वे ॥ ३ ॥

देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्ययोरुभयोरपि मार्गयोर्नात्यंतिकी पुरुषार्थसिद्धिः। काम्यफलस्य क्षयिष्णुत्वात्सातिशयत्वात्पारतंत्र्यादंगवैकल्याद्यनेकविघ्नोपहतत्वाच्च। नित्यनैमित्तिकयोरपि गर्भवासादिहेतुत्वेनानर्थप्रापकत्वात्। निषिद्धस्य चानर्थरूपतायाः प्रसिद्धत्वात्। ततो विरक्तानां निरवद्यपुरुषार्थजिज्ञासूनामुपनिषदारभ्यत इति कांडद्वयस्य हेतुहेतुमल्लक्षणः संबंधः। तत्रोपासनानां चित्तशुद्धिद्वारा ज्ञानकारणत्वात्कारणस्य च कार्यान्नियतपूर्वभावित्वप्रसिद्धेः साकारवस्तुविषयत्वेन मंदमतीनां तत्र स्थैर्यसंभवाच्च प्रागुपदेशः। तत्र प्राकृते पुरुषे कर्माभ्यासस्यानादिवासनया दृढीकृतत्वात्कर्मपरित्यागेन केवलोपासने चेतःसमर्पणाशक्तेरंगावबद्धकर्मसमृद्धिफलकं तावदुपासनमाह—

**ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतदक्षरं वर्णमुद्गीथभक्त्यवयवं परमात्मप्रतीकत्वेनोपासीत । तल्लक्षणया तस्य तद्विशेषणत्वे हेतुमाह—ओमिति हीति । हि यस्मादुद्गाता ओमित्यारभ्योद्गायत्युद्गीथाख्यसामभक्तिं निर्वर्त्तयतीत्यत ओंकार उद्गीथः । तस्य गुणादिविवक्षयाह—तस्येति । तस्याक्षरस्योपव्याख्यानमुपकारकाणां रसतमत्वादिगुणानां विस्पष्टमाख्यानं प्रवर्तत इति शेषः ॥ १ ॥

तदेवानुवर्त्तयंती रसतमत्वगुणं भूमिकापूर्वकमाह—

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥ २ ॥**

एषां चराचराणां भूतानां पृथिवी रसः सारः तस्यास्तत्कारणत्वात् । पृथिव्या आपो रसः अपां तत्कारणत्वात् । अपामोषधयो व्रीह्यादयो रसः ओषधीनामप्कार्यत्वात् गोरसादौ कार्येपि रसशब्दप्रयोगदर्शनात् । ओषधीनां पुरुषो देहो रसस्तस्यान्नपरिणामत्वात् । पुरुषस्य वाग्रसस्तदवयवानां वचसोऽधिष्ठानात् । वाच ऋग्रसस्तस्या वाग्निर्वर्त्यत्वात् । ऋचः साम रसस्तस्य ऋगध्यूढत्वात् । साम्न उद्गीथावयव ओंकारो रसस्तस्योंकारपूर्वकत्वात् ॥ २ ॥

अतः—

**स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥**

स एष भूतानामुत्तरोत्तररसानामतिशयेन रसो रसतमगुणः परम उत्कृष्टो यतः परार्ध्यः अर्द्धं स्थानं परं च तदर्द्धं च परार्द्धं तदर्हतीतिपरार्द्ध्यः परमात्मस्थानार्हः । अष्टमः पृथिव्याद्युक्तरससंख्यायां मध्येष्टसंख्यापूरकः यदुद्गीथः यो वा उद्गीथावयव ओंकारः ॥ ३ ॥

रसतमत्वगुणं विधाय आप्तिगुणं विधातुमुक्तगोदिजातिं शिष्यरूपा श्रुतिः पृच्छति—

**कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥**

उक्तानामृक्सामजातीनां मध्ये वाच ऋग्रस इत्यत्र कतमा कतमा ऋक्का वा ऋग्जातिर्विवक्षिता कतमत्कतमत्साम सामजातिः कतमः कतम उद्गीथ इति विमृष्टं विचारितं पृष्टं भवति। अत्र वीप्सात्रयं तु तत्तज्जातिज्ञाने श्रद्धातिरेकप्रदर्शनार्थं ॥ ४ ॥

एवं शिष्यरूपेण चोदिते श्रुतिराचार्यरूपोत्तरमाह—

**वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्गीथस्तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च ॥ ५ ॥**

वागेव ऋग्जातिः वाच ऋग्योनित्वात् । प्राणः पंचवृत्तिकः साम सामजातिः । प्राणबलेन हि गीतिरुत्पद्यते । ओमित्येतदक्षरं प्रकृतमेवोद्गीथस्तस्योद्गीथावयवत्वात् । अथ तद्गुणांतरं सर्वकामावाप्तिरूपं विदधाति—तद्वा एतदिति । तदेतद्वै प्रसिद्धं मिथुनं द्वंद्वं किं तत् यद्वाक्च प्राणश्चेति । एतयोरेव विशेषणं ऋक्च साम चेति ऋक्सामात्मनाभिव्यक्तयोरेव वाक्प्राणयोर्मिथुनत्वप्रदर्शनार्थं। ततश्च ऋक्सामात्मनाभिव्यक्तौ वाक्प्राणौ मिथुनं द्वंद्वमेवेत्यर्थः॥५॥

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥**

तदेतद्वाक्प्राणात्मकमिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते संबध्यते अंतर्भवत्योंकारस्य वाङ्मयत्वात्प्राणनिष्पाद्यत्वाच्च । उक्तमिथुनस्य कामापयितृत्वं दृष्टांतेनाह—यदेति । यदा वै यदेव मिथुनौ मिथुनावयवौ स्त्रीपुमांसौ ग्राम्यकर्मणि समागच्छतः संयुज्येयातां तदा तौ स्त्रीपुमांसौ अन्योन्यस्येतरेतरस्य काममभीष्टमापयतो वै प्रापयत एव यथा तथोक्तं मिथुनमित्यर्थः । तथाच स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोंकारस्य सिद्धमित्यभिप्रायः ॥ ६ ॥

एवमोंकारमाप्तिगुणविशिष्टं निरूप्य तदुपासनस्य गुणफलमाह—

**आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥**

आपयिता प्रापयिता ह वै कामानामभिलषितानां यजमानस्य भवति। कः उद्गाता य एतदक्षरमोंकारमुद्गीथमुद्गीथावयवभूतमेवं आप्तिगुणवद्विद्वाञ्जाननुपास्ते स इत्यर्थः ॥ ७ ॥

समृद्धिगुणं विधातुमाह—

**तद्वा एतदनुज्ञाक्षरं यद्धि किंचानुजानात्योमित्येव तदाहैषा एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥**

तदेतदोंकारमुक्तलक्षणमनुज्ञाक्षरं वै प्रसिद्धं। कुतः—यद्धि किञ्च यत्किञ्चन धनाद्यनुजानाति इदमन्नादि मया ग्रहीतव्यमित्युक्ते तद्विषयां ह्यनुज्ञां प्रयच्छति तदा मंतव्यं प्रत्योमित्येवाह वदत्योमित्येवाज्ञां प्रयच्छत्यत एवं समृद्धिहेतुत्वादेषा एव समृद्धिरपि का यदनुज्ञा याऽनुज्ञा। एतद्गुणोपासनफलमाह—समर्द्धयितेति। समर्द्धयिता पूरयिता ह वै कामानां यजमानस्य भवति। कः य उद्गाता एतदक्षरमेवं समृद्धिगुणकं विद्वानुपास्ते ॥ ८ ॥

यथोक्तं त्रिगुणमक्षरमुपास्यत्वाय स्तौति—

**तेनेयं त्रयी विद्या वर्त्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥**

तेन यथोक्तेनाक्षरेणेयं प्रसिद्धा त्रयी विद्या वेदत्रयीनिर्वर्त्यं कर्म वर्तते। त्रयीविद्याशब्देन तद्विहितकर्मलक्षणायां प्रसिद्धिमुपसंहरति—ओमितीति। ओमित्याश्रावयत्यध्वर्युः। ओमिति शंसति होता। ओमित्युद्गायत्युद्गाता। स्तुत्यंतरमाह—एतस्येति। तच्च कर्मैतस्यैवाक्षरस्यापचित्यै पूजार्थमपीश्वरस्याक्षरप्रतीकत्वात्। किञ्च तच्च कर्मैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिलक्षणविकारेण रसेन व्रीह्यादिनिर्वृत्तेन पुरोडाशादिना त्रयी विद्या वर्त्तत इति पूर्वेण संबन्धः ॥ ९ ॥

उक्तज्ञानसहितं कर्म फलातिशयहेतुरित्यर्थादुक्तार्थदार्ढ्याय पूर्वपक्षयति—

**तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च। यदेव विद्यया करोति**

**श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥**
**इति तृतीयस्य प्रथमः खंडः ॥ १ ॥**

तेनाक्षरेणोभावपि कर्म कुरुतः । कौ यश्चैतदक्षरं यथा व्याख्यातं वेद यश्च तथा न वेद न जानातीत्यतस्तयोः कर्मसामर्थ्यादेव फलसिद्धौ न ज्ञानकृतो विदुषः फलातिशय इत्येतत्परिहरति--नानात्विति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यतो विद्या चोपासना अविद्या च कर्म नाना नानाफलं पृथक्फलमतो यदेव कर्म विद्ययोद्गीथाद्यंगमात्रविषयया श्रद्धया तात्पर्येणोपनिषदा देवतादिविषयोपासनात्मिकया युक्तः सन्करोति तदेव कर्म वीर्यवत्तरमतिशयेन वीर्यवद्भवति । एवमुक्तगुणत्रयविशिष्टोद्गीथोपासनमुपसंहरति—इति खल्विति । इत्येवं खलूपासनोपयुक्तरसतमत्वादिगुणविशिष्टस्यैवाक्षरस्य व्याख्यानमित्यर्थः ॥ १० ॥ इति तृतीये प्रथमः खंडः ॥ १ ॥

अथास्यैवाक्षरस्याध्यात्मादिभेदेन मुख्यप्राणादिदृष्ट्योपास्यत्वार्थं प्राणशुद्धत्वमाख्यायिकया निर्द्धारयति—

**देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥**

प्राजापत्याः प्रजापतेर्यजमानावस्थस्य कर्मिणोऽपत्यवत्स्थिताः प्राजापत्याः देवाश्चासुराश्च देवासुराः । देवाः द्योतनात्मिकाः सात्त्विकाः करणवृत्तयः असुरा असुष्वेव रमणाद्राजसास्तामसाश्च करणवृत्तयस्ते चोभये ह किल वै यत्र यस्मिन्नन्योन्यविषयापहारलक्षणे निमित्ते संयेतिरे प्रतिदेहमन्योन्यस्य वृत्त्युद्भवाभिभवलक्षणं संग्रामं कृतवंतस्तत्त्र संग्रामनिमित्ते ह देवा उद्गीथकर्मोपलक्षितं सोमयागमाजह्रुराहृतवंतोऽनेन कर्मणा एनानसुरानभिभविष्यामः । पराभवं करिष्याम इति ॥ १ ॥

**ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥**

एवमभिप्रायास्ते देवाः नासिक्यं नासिकायां भवं प्राणं तदभिमानिनं देवमु-

द्गीथमुपासांचक्रिरे नासिक्यप्राणदृष्ट्योद्गीथावयवमोंकारमुपासितवन्त इति यावत्। तद्देवैरित्थमुपास्यमानं प्राणदेवं ह असुराः स्वाभाविकेन्द्रियवृत्तिरूपाः स्वोत्थेन पाप्मना आसंगलक्षणेन विविधुर्विद्धवन्तः संयोजितवन्तः। तस्मात्कारणात्तेन घ्राणेन लोकः उभयं सुरभि च दुर्गन्धि चेत्युभयविधं गन्धं गृह्णाति हि यस्मात्पाप्मना एष घ्राणाख्यः प्राणः विद्धः संयोजितः ॥ २ ॥

**अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥ अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥ अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥ अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ संकल्पते संकल्पनीयं चासंकल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥**

अथ ह वाचं चक्षुः श्रोत्रं मन इति पर्यायाः समानार्थाः ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥

**अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेत ॥ ७ ॥**

अथ घ्राणादिषु नैराश्यानंतरं ह य एवायं प्रसिद्धो मुख्यो मुखे भवो मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे। तमुपास्यमानं मुख्यं प्राणं ह असुराः पूर्वाभ्यासवशेन ऋत्वा प्राप्य विदध्वसुः स्वयमेव विनष्टाः। कथं। यथा लोके अश्मानं पाषाणं आखणं न शक्यते खनितुं विदारयितुमित्यखणः स एवाखणस्तं ऋत्वा प्राप्यार्थाच्छुत्यंतराच्च पांसुपिण्डो विध्वंसेत विशीर्येत एवमेव विदध्वसुरिति संबन्धः ॥ ७ ॥

उक्तगुणयोः फले आह—

**एवं यथाश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥**

यथाश्मानं पाषाणमृत्वा पांसुपिंडः विध्वंसते एवं हैव विध्वंसते स कः य एवंविदि यथोक्तप्राणगुणविदि पापं तदनर्हं कर्तुं कामयते इच्छति। यश्चैनं प्राणविदं अभिदासति हिनस्ति ताडनादि प्रतिकूलं करोति। तस्मात्स एष प्राणविदश्माखण इवाश्माखणः अप्रधृष्यः ॥ ८ ॥

घ्राणादिदेवताः पाप्मविद्धाः नतु प्राणदेवतेत्यत्र किं गमकमित्यत आह—

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवत्येतमु एवान्ततोऽविदित्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥**

हि यस्मान्नैवैतेन मुख्यप्राणेन सुरभि न च दुर्गंधि वस्तु विजानाति तस्मादेषः प्राणोऽपहतपाप्मा। किंच प्राणविषयस्यासाधारणत्वाभावादपि न तस्य पाप्मसंबंध इत्याह—तेनेति। तेन प्राणेन कृत्वा लोको यदश्नाति यत्पिबति तेनाशितेन पीतेन चेतरान् घ्राणादीन्प्राणानवति पालयति। तदुपयुक्तान्नस्य कार्यकरणसंघातस्थितिहेतुत्वे मानमाह—एतमु एवेति। अंततः अंतकाले एतं उ एव एतं मुख्यं प्राणं तद्वृत्तिहेतुभूतमन्नपानमविदित्वा अलब्ध्वोत्क्रामति घ्राणादिप्राणसमुदाय इत्यर्थः। तदा तेषामन्नप्राप्त्यभावादेवोत्क्रांतिर्नत्वऽशिशिषाऽभावादित्यत्र गमकमाह—व्याददातीति। व्याददात्येव मुखविदारणं करोत्येवांततो अंतकाले इत्यतोऽशिशिषास्त्येवेति निश्चीयते इत्यर्थः ॥९॥

एवं शुद्धत्वगुणदृष्टिविशिष्टोद्गीथोपासनमुक्त्वा आंगिरसत्वबृहस्पतित्वायास्यत्वगुणकं प्राणदृष्टिविशिष्टोद्गीथोपासनं विदधाति—

**तꣳहाङ्गिरा उद्गीथमुपासांचक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥**

तं ह प्राणमुद्गीथमंगिरा नाम ऋषिरुपासांचक्रे अतोऽन्येऽप्येतमु एव

प्राणमुद्गीथमांगिरसमंगिरसगुणविशिष्टं मन्यंते उपासते । कुतः अंगानां हस्तादीनां यद्यस्मादुद्गीथः प्राण एव सन् रसः तेनासावांगिरसः ॥ १० ॥

**तेन तꣳह बृहस्पतिरुद्गीथमुपासांचक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः॥११॥**

बृहस्पतिर्देवपुरोहितः । शेषं समानं । तत्र हेतुः वाग् हि यस्माद्बृहती तस्याः वाचः एष प्राणः पतिः ॥ ११ ॥

**तेन तꣳहायास्य उद्गीथमुपासांचक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥**

तेन अयास्यनामा ऋषिः । शेषं समानं । यद्यस्मादास्यान्मुखादयते निर्गच्छति तेन प्राणोऽयास्यः ॥ १२ ॥

**तेन तꣳह बको दाल्भ्यो विदांचकार । स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥**

किंच तं ह प्राणं बको नामतः [illegible] दाल्भ्यो विदांचकार ज्ञातवान् । स बको ह विदित्वा नैमिशीयानां निमिशक्षेत्रोद्भवाना [illegible] कर्वताम् उद्गाता बभूव स उद्गाता एभ्यो नैमिशीयेभ्यः कामानभिलषितानागायति स्म ह ॥ १३ ॥

**आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥**

**तृतीयस्य द्वितीयः खण्डः ॥ २ ॥**

अतोऽन्योऽप्यागाता प्रापयिता ह वै कामानां भवति । यः उद्गाता एवं प्राणात्मकं विद्वानेतदक्षरमोंकारमुद्गीथावयवं उपास्ते सोपि । इत्येवमुक्तमध्यात्मं दर्शनमित्यर्थः ॥ १४ ॥ इति तृतीये द्वितीयः खण्डः ॥ २ ॥

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति उद्यꣳस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥**

अथाध्यात्मप्राणदृष्ट्योद्गीथोपासनकथनानंतरं आधिदैवतं देवतामधिकृत्य प्रवर्त्तमानं कथं य एवासावादित्यस्तपति तमुद्गीथमुपासीतादित्यदृष्ट्योद्गीथमुपासीतेति यावत्। कस्मात्। उद्यन्नुद्गच्छन्वै एष सविता प्रजाभ्यः प्रजार्थं प्रजानामन्नोत्पत्त्यर्थमुद्गायत्युद्गातावदुद्गायतीवातस्तथोपासनं तद्गुणमाह—उद्यन्निति। उद्यन्सविता नैशं तमस्तज्जं च भयं प्राणिनामपहंति नाशयति। एतद्गुणोपासनफलमाह—अपहंतेति। अपहंता ह वै भयस्य जन्ममरणादिलक्षणस्य तमसश्च तत्कारणस्याज्ञानस्य भवति। कः य एवं उक्तगुणमादित्यं वेदोपास्ते सः॥१॥

अध्यात्माधिदैवतयोरेकोपासनविवक्षया गुणादिसाम्यमाह—

**समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिममगुं चोद्गीथमुपासीत ॥ २ ॥**

अपि स्थानतो भिन्नोप्ययं प्राणो गुणतो नामतश्च सवित्रा समानस्तुल्य एव। असावादित्यः प्राणेन समानः कथं उष्णोयं प्राणः उष्णश्चासौ सविता। तथा स्वरति गच्छतीति स्वर इतीमं प्राणमाचक्षते कथयंति तथा स्वर इति प्रत्यावृत्त्यागच्छतीति प्रत्यास्वर इति चामुं सवितारमाचक्षते अस्तमित्वा पुनरुद्यात्। प्राणस्य पुनस्तस्मिन्नेव देहे अनागमनान्न प्रत्यास्वरत्वमपि नामेत्यर्थः। यस्मादेवंगुणनामभ्यां साम्यं तस्माद्वै एव एतमिमं प्राणममुं चादित्यमेकीकृत्योद्गीथमुपासीत ॥ २ ॥

अथ प्राणवृत्तिविशेषदृष्ट्योद्गीथोपासनमाह—

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥**

अथानंतरं व्यानमेव खलूद्गीथमुपासीत। व्यानस्वरूपमेवेतरभेदेन दर्शयति-यदिति। यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति सः प्राणः प्राणवायुवृत्तिविशेषः। यदपानिति अपश्वसिति मुखनासिकाभ्यामेव वायुमंतराकर्षति सोऽपानो वृत्तिविशेषः। अथानंतरमुक्तलक्षणयोः प्राणापानयोर्यः संधिस्तत्स्थो वृत्तिविशेषः स व्यानः। तस्य वीर्यवत्कर्महेतुत्वात्तदुपासनमि-

त्याह—यो व्यान इति। यो व्यानः सा वाक् यस्मात्सा व्यानमात्रनिर्वर्त्या तस्मादप्राणन्ननपानन्प्राणापानव्यापारमकुर्वन्वाचमभिव्याहरत्युच्चारयति ॥ ३ ॥

तथा वाग्विशेषामृचमृक्स्थं साम सामावयवं चोद्गीथं व्यानमात्रनिर्वर्त्य मित्याह—

**या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥**

या वाक् सा ऋगित्यादि समानार्थम् ॥ ४ ॥

**अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥**

अतोऽस्माद्वागाद्यभिहरणादन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्त्यानि यथाग्नेर्मथनमाजेर्मर्यादापासरणं धावनं दृढस्य धनुष आयमनमाकर्षणमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोरेतस्मादेवोक्तकारणाद्व्यानमेवोद्गीथमुपासीत नाऽन्यद्वृत्त्यंतरम्। फलं त्वेतद्गुणानुरूपं द्रष्टव्यमित्यर्थः ॥५॥

उद्गीथोपासनप्रसंगेन तदक्षरोपासनमध्यात्माधिदैवादिभेदेनाह—

**अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदꣳ सर्वꣳ स्थितम् ॥ ६ ॥**

उद्गीथनामाक्षराण्युपासीतेत्युक्ते भक्त्यक्षरोपासनशंकां वारयति—उत्-गी-थ-इत्येतान्यक्षराणि। तत्र प्राण एवोत् उदक्षरे प्राणदृष्टिः कर्त्तव्या कुतः प्राणेन हि यस्मात्सर्वो लोकः उत्तिष्ठति। वाक् गीः वाचो ह गिर् इत्याचक्षते शिष्टाः। अन्नं थं अन्ने हि यस्मादिदं सर्वं प्राणिजातं स्थितं ॥ ६ ॥

**द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थꣳ सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवा-**

**नन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥**

तथा द्यौरेवोदित्यादिसमानम् । एतदुपासनफलमाह—दुग्ध इति । असै उपासकाय वाग् दोहं दुग्धे दोग्धि । कोऽसौ दोहः यो वाचो दोह ऋग्वेदादीनां स्वाधीनोच्चारणलक्षणः । किञ्चान्नवान्प्रभूतान्नोऽन्नमत्तीत्यन्नादश्च दीप्ताग्निर्भवति । कः य एतानि प्राणादिरूपेणोक्तान्युद्गीथाक्षराण्येवमुत्थानादिधर्मकाणि विद्वानुपास्ते कथमुद्गीथ इत्येवमित्यर्थः ॥ ७ ॥

वाक्समृद्ध्यादिफलकमुपासनमुपदिश्य फलसमृद्धिर्यथा भवति तत्प्रकारज्ञानं सर्वकाम्योपासनशेषभूतं प्रासंगिकं विदधाति—

**अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥**

अथोक्तोपासनानंतरं खल्वाशीःसमृद्धिराशिषः कामफलस्य समृद्धिर्यथा भवेत्तथा विधीयत इति शेषः । उपसरणान्युपसर्तव्यानि ध्येयानि वस्तूनि इत्येवमुपासीत । तान्येव दर्शयति येनेति । येन साम्ना सामविशेषेण स्तोष्यन् स्तुतिं करिष्यन् स्याद्भवेदुद्गाता तदुपधावेदुपसरेदुत्पत्त्यादिभिश्चिन्तयेत् ॥८॥

**यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥ येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तँ स्तोममुपधावेत् ॥ १० ॥ यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥**

यस्यामृचि तत्साम वर्त्तते तां च ऋचमृग्देवतादिभिरुपधावेदिति प्रत्येकं संबध्यते । यदार्षेयं साम तं च ऋषिं यां सामदेवतामभिष्टोष्यन्स्यात्तां च देवतां येन गायत्र्यादिच्छन्दसा स्तोष्यन्स्यात्तच्छन्दः येन त्रिवृदादिस्तोमेन स्तोष्यमाणः स्यात्तं च स्तोमं । अत्रात्मनेपदप्रयोगात्सोमफलस्य कर्तृगामित्वमवगम्यते । यां दिशमभिव्याप्य देवताविशेषं स्तोष्यन्स्यात्तां च दिशमधिष्ठात्रिन्द्रादिभिरुपधावेत् ॥ ९ ॥ १० ॥ ११ ॥

**आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृद्ध्येत**

**[illegible]त्कामः स्तुवीतेति [illegible]त्कामः स्तुवीतेति ॥ १२ ॥**

**इति तृतीयस्य तृतीयः खण्डः ॥ ३ ॥**

अंतत एतद्ध्यानावसाने उद्गातात्मानमपि गोत्रादिभिरुपसृत्य सञ्चिन्त्य काममभिलषितमनुसंदधानोऽप्रमत्तः स्वरादिभ्यः प्रमादमकुर्वन्स्तुवीत स्तोष्यमाणां देवतामित्यर्थः । एतत्फलमाह अभ्याशो हेति । यत्कामो यः कामो यस्य सोयं यत्कामः सन्नुद्गाता यद्यस्मिन्कर्मणि यथोक्तरीत्या स्तुवीत स्तोता भवेत्तत्र कर्मणि अभ्याशो ह क्षिप्रमेवास्मै एवंविदुद्गात्रे स कामः समृध्येत समृद्धिं गच्छेत् । पुनरुक्तिस्तु प्रासंगिकोपासनसमाप्त्यर्था ॥ १२ ॥ इति तृतीये तृतीयः खण्डः ॥ ३ ॥

उद्गीथप्रकरणाविच्छेदज्ञापनार्थं प्रासंगिकं हित्वा प्रकृतमेवानुसंदधाति—

**ओमित्येतदक्षरमुद्गी[illegible]तोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतदक्षरमित्याद्युक्तार्थं । तस्याक्षरस्योपयुक्तयोरमृताभयगुणयोर्व्याख्यानं कर्तुं प्रस्तावं करोति ॥ १ ॥

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिराच्छादयन्यदेभिराच्छादयꣳस्तच्छन्दसां छन्दस्त्व[illegible] ॥ २ ॥**

देवा वै देवासुरा इत्यत्रोक्ताः । मृत्योर्मारकात्पाप्मनो बिभ्यतो भीताः संतः त्रयीं विद्यां त्रयीविहितं कर्म प्राविशन् प्रविष्टवन्तो वैदिकं कर्म प्रारब्धवन्तस्तन्मृत्युत्राणं मन्यमानाः । किं च ते देवाः कर्मण्यविनियुक्तैः छन्दोभिर्मन्त्रैर्जपादि कुर्वन्त आत्मानं कर्मान्तरे आच्छादयन् छादितवन्तः । यद्यस्मादेभिः छन्दोभिः देवा आत्मानमाच्छादयंस्तत्तस्मात् छन्दसां छन्दस्त्वम् ॥ २ ॥

एवं कर्म कुर्वतामपि मृत्युवश्यता न व्यावृत्तेत्याह—

**तानु तत्र मृत्युर्यथा मत्स्य[illegible]दके परिपश्येदेवं [illegible]च साम्नि यजुषि । ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥**

यथा लोके मत्स्यमुदके परिपश्येन्मत्स्यघातको बडिशाद्युपायसाध्यं मन्य-

मानः । एवमेव मृत्युस्तान्कर्मपरान् उ अपि देवान् तत्र ऋचि साम्नि यजुषि तत्संबद्धे कर्मणि पर्यपश्यत्कर्मक्षयोपायसाध्यान्मन्यमानः । मृत्युपरिहारोपायमुपदिशति—ते नु वित्त्वेति । नु वितर्के । ते देवाः कर्मणा शुद्धात्मानः संतो मृत्योश्चिकीर्षितं वित्त्वा विदित्वा ऋचः साम्नो यजुषः उक्तार्थादूर्ध्वा व्यावृत्ताः संतः स्वरमेवोंकारमेव प्राविशन्प्रविष्टाः तदुपासनपराः संवृत्ताः ॥ ३ ॥

ओंकारे कथं स्वरशब्दप्रवृत्तिरित्यत आह—

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥**

यदा यस्मिन्काले वै ऋचमाप्नोत्यध्ययनेन स्वाधीनं करोति तदोमित्येवातिस्वरत्यतिशयेनादरधियोच्चारयति । एवं यदा सामाप्नोति तदोमित्येवातिस्वरति । एवं यजुःप्राप्तिरप्योंकारपूर्विकैवातः एष उ अपि स्वरः कः यदक्षरमोंकाराख्यमेतच्चामृतमभयं तथाविधब्रह्मप्रतीकत्वात् । तदुपासकानां गुणानुरूपं फलमाह तदिति । तदुक्तोभयरूपमोंकारं प्रविश्य ब्रह्मबुद्ध्या ध्यात्वा अमृता अभयाश्चाभवन् ॥ ४ ॥

तथाप्यन्येषां किमित्यत आह—

**स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳस्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥ चतुर्थः खण्डः ॥ ४ ॥**

स यः कश्चिदन्योऽपि देववदेतदक्षरमेवमुक्तगुणं विद्वान्प्रणौति प्रकर्षेण स्तौत्युपास्ते सोप्यक्षरममृतमभयं ब्रह्म प्रविशति राजगृहं प्रविष्टानामिवाक्षरं प्रविष्टानामपि फले विशेषः स्यादित्यत आह—तत्प्रविश्येति । तदुक्ताक्षरप्रतीकं ब्रह्म प्रविश्य यदमृता येनामृतत्वेन विशिष्टा देवा अभूवंस्तदमृतस्तेनैवामृतत्वेन विशिष्टो भवत्यन्योऽपीत्यर्थः ॥५॥ इति तृतीये चतुर्थः खंडः ॥ ४॥

प्रणवोद्गीथयोरेकत्वोक्तिपूर्वकमुक्तादित्यदृष्ट्योद्गीथोपासनं गुणांतरविधानायानुवदति—

**अथ खलु य उद्गीथः सः प्रणवो यः प्रणवः स**

**उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥**

अथोभयगुणकोपास्तिकथनानंतरं खलु प्रसिद्धं । य उद्गीथः स प्रणवः बह्वृचां यः प्रणवः स उद्गीथश्छदोगानामिति । असौ वा आदित्य उद्गीथ एष प्रणवः प्रणवशब्दवाच्योपि कस्माद्धि यस्मादेषः सवितोमिति स्वरन्नुच्चारयन्नेति गच्छति । यद्वा प्राणिनां प्रवृत्त्यर्थमोमिति स्वरन्ननुज्ञां कुर्वन्निवैति ॥ १ ॥

अत ओंकारत्वं सवितुरनुवदितं निंदित्वा रश्मिभेददृष्टिं सफलां विदधाति—

**एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥**

एतमु एवादित्यं रश्मिभेदमकृत्वैवाहमभ्यगासिषमाभिमुख्येन गीतवान् ध्यानं कृतवान् यस्मात्तस्मान्मम त्वमेकः पुत्रोसीति ह कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाचातस्त्वं रश्मीनादित्यं च भेदेन पर्यावर्त्तयादिति प्रथमपुरुषः पर्यावर्त्तयेति मध्यमपुरुषत्वेन व्याख्येयः त्वंपदयोगात् । एवं बहवो वै ते तव पुत्रा भविष्यंतीत्येवमुक्तमाधिदैवतं दर्शनमित्यर्थः ॥ २ ॥

तथैवोक्तप्राणोपासनमनूद्य निंदित्वा मुख्यामुख्यप्राणयोर्भेदेनोपासनफलमाह—

**अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥**

अथानंतरमध्यात्ममुच्यते । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत कुतो हि यस्मादेषः प्राणोप्योमिति स्वरन्वागादिप्रवृत्त्यर्थमनुज्ञां कुर्वन्निवैति । शेषं समानं ॥ ३ ॥

**एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥**

अतः प्राणान्वागादीन्मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं भूमानं बहुत्वोपेतं कृत्वा त्वं मनसाभिगायतादावर्त्तय बहवो वै मे मम पुत्रा भविष्यंतीत्यभिप्रायः सन्नित्यर्थः ॥ ४ ॥

एवं प्रधानाव[illegible]भूतस्य प्रणवोद्गीथयोरेकत्वज्ञानस्यानुवादपूर्वकं फलमाह—

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतम[illegible]समाहरतीत्य[illegible]समाहरतीति ॥ ५ ॥ इति तृतीयस्य पञ्चमः खण्डः ॥ ५ ॥**

अथ खल्वित्यनुवाद उक्तार्थः । एतदेकत्वविज्ञानसामर्थ्यादुद्गाता होतृषदनाद्धोता यत्रस्थः शंसति तद्धोतृषदनं तन्मात्रादेव तु क्षतसन्धानासंभवाल्लक्षणया हौत्रात्कर्मणः सम्यक्प्रयुक्तात्प्रणवात्तद्धेतुं कृत्वा दुरुद्गीतमपि दुष्टमुद्गीतमुद्गानं स्वकर्मणि प्रामादिकं क्षतं प्राप्तमनुसमाहरत्येवानुसंदधत्येव । अभ्यास आदरार्थः ॥ ५ ॥ इति तृतीये पञ्चमः खण्डः ।

पुत्राद्यैश्वर्यैकदेशविषयमुपासनमुक्त्वा ज्योतिष्टोमाद्यधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवतमध्यात्मं चोद्गीथोपासनं विधातुं तावदाधिदैवमंगोपासनं विदधाति इयमेवेत्यारभ्य एषोंतरादित्ये इत्यतः प्राक्तनग्रंथेन—

**[illegible]ः साम तदेतदेतस्यामृच्यध्यूढꣳसाम तस्मादृच्यध्यूढꣳ साम गीयत इयमेव साऽग्नि-रम[illegible]त्साम ॥ १ ॥**

इयमेव पृथिवी ऋक् ऋचि पृथिवीदृष्टिः कर्त्तव्या । अग्निः साम साम्न्यग्निदृष्टिं कुर्यात् । कुतः तदेतदग्न्याख्यं सामैतस्यां पृथिव्यामृच्यध्यूढमधिगतमुपरिभावेन स्थितं यस्मात्तस्मादिदानीमप्यृच्यध्यूढमृच्याश्रितं साम गीयते । तथा इयमेव पृथिवी सा सामनामार्द्धसाशब्दवाच्या स्त्रीत्वात् । अग्निरम इत्युत्तरार्द्धामशब्दवाच्यः पुंस्त्वात् । तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वात्साम ॥ १ ॥

**अन्तरि[illegible]मेवर्ग्वायुः साम तदेत[illegible]तस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरम[illegible]त्साम ॥ २ ॥ द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मा-**

**ऋच्यध्यूढꣳ साम गीयते द्यौरेवासादित्योऽमस्तत्साम ॥ ३ ॥ नक्षत्राण्येवर्क्चन्द्रमाः साम त· तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥**

पूर्ववदेवान्येपि पर्याया बोद्धव्याः ॥ २ ॥ ३ ॥ ४ ॥

**अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥ ५ ॥**

**अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥**

शुक्लं भाः शुक्लदीप्तिः परः कृष्णमतिशयेन कार्ष्ण्यं योगिभिर्दृश्यते न सर्वैः । शेषं सुबोधम् । अथाधिदैवप्रधानोपास्यस्वरूपमाह । यद्वांऽगोपासनानि समाप्याधिदैविकीं प्रधानोपासनां विवक्षुरुपास्यस्वरूपमुपन्यस्यति—अथेति । य एष आदित्यमण्डले हिरण्मय इव हिरण्मयो ज्योतिर्मयो न तु सुवर्णविकारोऽसंभवात् । पुरुषः पुरिशयनात्स्वात्मना जगत्पूरणाद्वा दृश्यते समाहितचेतोभिः । तथा हिरण्मयानि श्मश्रूणि यस्येति हिरण्यश्मश्रुः हिरण्मयाः केशा अस्येति हिरण्यकेशः ज्योतिर्मयश्मश्रुकेश इति यावत् । किं बहुना आप्रणखात् प्रणखो नखाग्रं तेन सह सर्व एव सुवर्ण इव भारूपः ॥ ५ ॥ ६ ॥

सर्वविशेषणादक्ष्णोरपि तत्प्रसंगं प्रत्याह—

**तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥**

यथा कप्यासं पुंडरीकं कपिर्येनास्ते उपविशति तत्कप्यासं कपिपृष्ठान्तं तद्वदत्यन्ततेजस्वि पुण्डरीकमिव तथैवं तस्योपास्यस्यादित्यस्योदिति गौणं नाम । कुतः । स एष देवः सर्वेभ्यः पाप्मभ्य उदितः उत् इतः गतः

उद्गतः । अथोपासनफलमाह—उदेतीति । उदेति ह वै उद्गच्छत्येव सर्वेभ्यः पाप्मभ्यो य एवं यथोक्तमुन्नामानं परमात्मानं वेदोपास्ते ॥ ७ ॥

परमात्मनोऽप्युद्गीथे संपाद्योपासनं कर्त्तव्यमिति तस्य सर्वात्मत्वं वदन्नाह—

**तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मा-त्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मा-त्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधि-दैवतम् ॥ ८ ॥ इति तृतीयस्य षष्ठः खण्डः ॥ ६ ॥**

तस्योन्नाम्न ऋक् च साम च द्यावापृथिव्याद्युक्तलक्षणे गेष्णौ पर्वणी यस्मात्तस्मात्परमात्मोद्गीथ इति परोक्षेणोच्यते । परोक्षप्रिया इव हि देवा इति श्रुतेः । देवस्योन्नामत्वे उद्गातृत्वप्रसिद्धिं प्रमाणयति—तस्मादिति । यस्मादेतस्योन्नाम्नो हि गाता तस्मात्तु एव तस्मादेवोदं गायतीत्युद्गातेत्युद्गातृनामप्रसिद्धः । आदित्यान्तर्गतस्य देवस्य परमात्मत्वे हेत्वंतरमाह—स एष इति । स एष उन्नामदेवः । ये चामुष्मादादित्यात्परागञ्चनात्पराञ्च उर्ध्वालोकास्तेषां लोकानां चेष्टे ईशिता देवकामानां च तदधिष्ठातारो ये देवास्तेषां कामानां काम्यमानफलानां चेष्टे इत्यधिदैवतं देवताविषयं देवस्योद्गीथस्य स्वरूपमित्यर्थः ॥ ८ ॥ इति तृतीयस्य षष्ठः खण्डः ।

अथाध्यात्मिकोपासने अङ्गानुचिन्तनमाह—

**अथाध्यात्मं वागेवर्क्प्राणः साम तदेतदेतस्या-मृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गी-यते वागेव सा प्राणोऽमस्तत्साम ॥ १ ॥**

वागेव ऋक् प्राणो घ्राणः सामेत्याद्याधिदैविकपर्यायवज्ज्ञेयम् ॥ १ ॥

**चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव सात्माऽमस्तत्साम ॥ २ ॥ श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥**

चक्षुरेव ऋगात्मेत्यत्रात्मशब्देन चक्षुःस्थच्छायैवोच्यते ॥ २ ॥ ३ ॥

अथाध्यात्मं प्रधानमनु[illegible]ह—

**अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम [illegible]ुच्यध्यूढ१ साम तस्मादृच्यध्यूढ१ साम गीयते। अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥**

अथ यदेतदक्ष्णः शुक्लं भा इति समानार्थं । य एषोक्षिणि पुरुषः परमात्माख्यो दृश्यते योगिभिः । सेत्यादितच्छब्दैश्चाक्षुषोक्तिः । लिङ्गव्यत्ययस्तु विधेयलिङ्गापेक्षया ॥ ४ ॥

**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते [illegible]वर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं या[illegible] गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥**

सैव पुरुष ऋक् उक्थादन्यच्छस्त्रजातं तत्साम स्तोत्रं तदुक्थं शस्त्रविशेषः। तद्यजुः स्वाहादिमन्त्रजातं । तद्ब्रह्म वेदो ब्राह्मणभागः । स्थानभेदेनाक्षिपुरुषस्यादित्यपुरुषाद्भेदशंकां वारयति—तस्यैतस्येति । तस्यैतस्य चाक्षुषपुरुषस्य तदेव रूपं यदमुष्यादित्यपुरुषस्य रूपं हिरण्मय इत्याद्युक्तं यावमुष्यादित्यस्य गेष्णौ पर्वणी तावेवास्य चाक्षुषस्य गेष्णौ यदमुष्य नामोदित्युद्गीथ इति च तदेवास्य नाम ॥ ५ ॥

किञ्चाधिदैविकस्येवाध्यात्मिकस्यापि निरंकुशैश्वर्यश्रवणात्तयोरै[illegible]यमित्याह—

**स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनु[illegible]नां चेति तद्य इमे [illegible] [illegible]त ते गायन्ति त[illegible]मात्ते धनसनयः ॥ ६ ॥**

स एष चाक्षुषः पुरुषो ये चैतस्मादाध्यात्मिकाच्चाक्षुषपुरुषात् क्षेत्रज्ञादर्वाञ्चोऽर्वाग्गता लोका मानुषाद्यास्तेषां चेष्टे ईशिता मनुष्यकामानां चेष्टे । पुनस्तयोर्भेदाभावे हेत्वन्तरमाह—तद्य इति । तच्छब्दो यस्मादर्थे । ये इमे गायकाः वीणायां राजादीन् गायन्ति ते यस्मादेतमेव सर्वोपाधिप्रविष्टमीश्वरमेव गायन्ति तस्मात्ते गायकाः धनसनयो धनलाभयुक्ताः ॥ ६ ॥

अथैवं तयोरेकत्वे सिद्धे उपासनमप्येकमेवेति दर्शयति—

**अथ य एवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाप्नोति देवकामाꣳश्च ॥ ७ ॥**

य एवं यथोक्तं चक्षुरादित्यस्थानस्थं देवं विद्वानुद्गीथे संपाद्य साम गायति स उभौ चाक्षुषादित्यावेकीकृत्य गायति गायेदुपासीत । उपासनैक्यं द्रढयन् तत्फलमाह सोऽमुनेति । स आदित्यदेवोपासकः स एवैषोऽक्षिपुरुषोपासकोऽमुनादित्येनादित्यांतर्गतदेवो भूत्वा ये चामुष्मादादित्यात्पराञ्च उर्द्ध्वा लोकास्तांश्चाप्नोति । देवकामांश्चाप्नोति ॥ ७ ॥

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥**

अथापि अनेनैवाक्षिपुरुषेणैवाक्ष्यंतर्गतदेवो भूत्वा ये चैतस्मादक्षिपुरुषादर्वाचो लोकाः मनुष्याद्यास्तांश्चाप्नोति मनुष्यकामांश्चाप्नोति । अस्य फलस्य यजमानगामित्वं दर्शयति—तस्मादिति । तस्मादु ह किलोद्गाता यजमानं प्रति ब्रूयाद्वदेत् ॥ ८ ॥

**कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ९ ॥**

**इति तृतीये सप्तमः खण्डः ॥ ७ ॥**

कं ते तव काममिष्टमागायानीति । अत एष एवोद्गाता हि यस्मात्कामागानस्येष्टे कामं संपादयितुमीष्टे समर्थः । कः य उद्गाता यथोक्तेन प्रकारेण विद्वान्साम गायति । अभ्यास उक्तोपासनसमाप्त्यर्थः ॥ ९ ॥ इति तृतीये सप्तमः खंडः । ७ ॥

उक्तस्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं वक्तुं सुखबोधार्थमाख्यायिकामाचरति—

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ।**

**ते हा ऽद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥**

त्रयस्त्रिसंख्याका ह उद्गीथे उद्गीथज्ञानं प्रति कुशलाः निपुणा बभूवुः । के ते शिलको नामतः । शलावतोपत्यं शालावत्यः चिकितायनस्यापत्यं चैकितायनो दल्भ्यगोत्रापत्यं दाल्भ्यः प्रवाहणो नामतः जीवलस्यापत्यं जैवलिः । ते त्रयो हान्योन्यमूचुः—किं वा उद्गीथे वै कुशला वयं स्मो भवामोऽतो हंत यद्यनुमतिर्भवतां भवेत्तर्ह्युद्गीथे कथां वादात्मिकां कुर्म इति परस्परमुक्ते सति ॥ १ ॥

**तथेति ह स ऽपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥ २ ॥**

तथेत्यंगीकारं कृत्वा ह ते समुपविविशुरुपविष्टाः । स ह प्रवाहणो जैवलिः राजोवाच किं भगवंतौ पूजावंतावग्रेपूर्वं वदतां युवयोर्ब्राह्मणयोर्वदतोरहं वाचं वाङ्मात्रं श्रोष्यामीति ॥ २ ॥

**स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा ऽच्छानीति पृच्छेति होवाच ॥ ३ ॥**

एवमुक्ते ह शिलकः शालावत्यः चैकितायनं दाल्भ्यं प्रत्युवाच । किं हे दाल्भ्य स त्वं हंत यद्यनुमंस्यसे तर्हि त्वा त्वामहं पृच्छानीत्युक्ते दाल्भ्यः पृच्छेति होवाच ॥ ३ ॥

इत्युक्ते इतरः—

**का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥**

का साम्न उद्गीथाख्योंकारस्य गतिराश्रयः कारणं किमिति शालावत्येन पृष्टो दाल्भ्यः स्वरो ध्वनिविशेषः ओंकारस्य कारणं होवाच । स्वरस्य का गतिरिति पृष्टे प्राणो बलं कारणमिति होवाच । प्राणस्य का गतिरित्युक्ते अन्नं

 

कारणमिति होवाच । अन्नस्य का गतिरित्युक्ते आपः कारणमिति होवाच ॥ ४ ॥

**अपां का गतिरित्यसौ लोक इति होवाचाऽमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसꣳस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥**

अपां का गतिरित्युक्ते असौ स्वर्लोकः कारणं अमुष्य स्वर्लोकस्य का गतिरिति पृष्टे दाल्भ्यो न स्वर्लोकमतीत्याश्रयान्तरं प्रति साम कश्चिन्नयेत्प्रापयेदिति होवाच । अतो वयमपि स्वर्गं लोकं प्रति सामाभिसंस्थापयामः स्वर्गलोकप्रतिष्ठितं साम जानीमः। भ्रांतत्वशंकां वारयितुं हेत्वंतरमाह—स्वर्ग इति । स्वर्गसंस्तावं स्वर्गो वै लोकः सामवेद इति स्वर्गत्वेन संस्तवनं संस्तवो यस्य तत्स्वर्गसंस्तावं हि यस्मात्सामातः स्वर्गप्रतिष्ठं ॥ ५ ॥

**तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥**

इत्युक्तवंतं चैकितायनं दाल्भ्यं प्रति शिलकः शालावत्य उवाच। किमप्रतिष्ठितं असंस्थितं वै किल ते तव हे दाल्भ्य साम । स्वर्गप्रतिष्ठितं सामेति विज्ञाने दोषमाह—यस्त्विति । विपरीतविज्ञानं प्रति यस्तु कश्चिन्मिथ्यावचनमसहमानः एतर्ह्येतस्मिन्मिथ्यावचनकाले ब्रूयात् किं ते तव विपरीतवादिनः मूर्द्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति । एवं प्रक्षालनमपराधस्य। ते तव मूर्द्धा शिरो व्यपतेदिति ॥ ६ ॥

एवमुक्तो दाल्भ्य आह—

**हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचाऽमुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकꣳ**

**सामाभि-ंस्थापयामः प्रतिष्ठा-ंस्ताव॰ हि सामेति ॥ ७ ॥**

हंताहमेतत्पृष्टं सामाश्रयं भगवतः सकाशात् वेदानीत्यवगुरुः शालावके हे दाल्भ्य विद्धीति होवाच । इत्युक्तो दाल्भ्यः पृच्छति–अमुष्येति-अमुष्य स्वर्लोकस्य का गतिः किं कारणमिति पृष्टः शालावत्यः ०। पृथिवीलोकः कारणमिति होवाचास्य यागादिना स्वर्गलोकपोषकत्वात् अस्य लोकस्य का गतिरिति पृष्टे न प्रतिष्ठां लोकं पृथिवीलोकमतिनयेत्साम कश्चिदिति होवाच । अतो वयमपि प्रतिष्ठां प्रतिष्ठाहेतुभूतं पृथिवीलोकं प्रति सामामिसंस्थापयामः । कुतः । प्रतिष्ठासंस्तावं इयं वै रथंतरमिति श्रुत्या पृथिवीत्वेन संस्तुतं हि यस्मात्सामातः पृथिवीप्रतिष्ठम् ॥ ७ ॥

**त॰ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्-ूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेद.. विद्धीति होवाच ॥ ८ ॥ इति -तीयस्याष्टमः खण्डः ॥ ८ ॥**

इत्येवमुक्तवंतं प्रति प्रवाहण इत्यादि पूर्ववत् ॥ ८ ॥ इति तृतीयेऽष्टमः खण्डः ।

**अस्य लोकस्य का गति त्याकाश इति ह.. सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥**

अस्य पृथिवीलोकस्य का गतिरिति पृष्टः प्रवाहणः आकाशः विभुत्वादिगुणसाम्यात्परमात्मैवेति होवाच । कुतः सर्वाणि ह वा इमानि स्थावरजंगमानि भूतान्याकाशादेवोत्पद्यंत आकाशं प्रत्यस्तं यंति नाशं गच्छंति । किंच आकाश एव हि यस्मादेभ्यो यथोक्तसर्वभूतेभ्यो ज्यायान्महत्तरोऽतः सर्वेषां भूतानां परमायनं प्रतिष्ठा त्रिषु कालेषु । एतच्च सर्वं परमात्मपरिग्रह एव घटत इत्यर्थः ॥ १ ॥

**स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयाँसमुद्गीथमुपास्ते ॥ २ ॥**

ततश्च स एष आकाशः परमात्मा परोवरीयान् परमुत्तरोत्तरं वरीयसोऽपि स्वरप्राणान्नादेः सकाशादतिशयेन परोपरीयानुत्तरोत्तरश्रेष्ठादपि श्रेष्ठः स उद्गीथः संपन्नः । किंच स एष उद्गीथे संपादितः परमात्मा आकाशोनंतस्त्रिविधपरिच्छेदशून्यः । एवमुपास्यस्वरूपमुक्त्वा तदुपासनविधिफलमुपदिशति— परोवरीय इति । परोवरीयः परेभ्यो राजादिभ्योऽतिशयेन वरीयस्त्वं श्रैष्ठ्यं हास्योपासकस्य भवतीति दृष्टं फलम् । अदृष्टं तु विद्वान् परोवरीयसो ह उत्तरोत्तरान् ब्रह्माकाशांताँल्लोकान् जयति प्राप्नोति । कः य एवमुक्तरीत्योद्गीथदर्शनं विद्वान् परोवरीयांसमुद्गीथमुपास्ते ॥ २ ॥

विधिशेषमर्थवादमाह—

**तँ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति॥३॥**

तमेतमुद्गीथदर्शनं ह अतिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशांडिल्यायोक्त्वोवाच किं यावत्कालं ते तव प्रजायां संततौ एनमुद्गीथं त्वत्संततिजाः वेदिष्यंते ज्ञास्यंति तावत्पर्यंतमस्मिंल्लोके एभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्यः परोवरीयः उत्तरोत्तरं विशिष्टतरं जीवनं ह भविष्यति ॥ ३ ॥

**तथामुष्मिँल्लोके लोक इति । स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥ इति तृतीयस्य नवमः खण्डः ॥ ९ ॥**

तथाविशिष्टतरजीवनवदमुष्मिन्नदृष्टेपि लोके परोवरीयांल्लोको भविष्यतीति । भवत्वेतत्फलं पूर्वेषां महाभाग्यानां नचैतद्युगीयानामित्यत आह—स य इति । स यः कश्चिदेतमुद्गीथमिदानीमप्येवं विद्वानुद्गीथमुपास्ते तस्यापि ह परोवरीय

एव ह जीवनमस्मिंल्लोके भवति तथामुष्मिंल्लोके परलोके परोवरीयो लोः
अभ्यास उद्गीथोपास्तिसमाप्त्यर्थः ॥ ४ ॥ इति तृतीये नवमः खण्डः ॥ ९ ॥

उद्गीथोपासनप्रसंगेन प्रस्तावप्रतिहारविषयमुपासनं वक्तुं तावदाख्यायिमारचयति—

**मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥**

मटच्यो मर्दनहेतवः पाषाणवृष्ट्यादयस्ताभिः कुरुदेशेषु हतेषु अन्नालाभादाटिक्यः अटनाय प्रवृत्तः । आटिक्या इति पाठांतरे तु गृहांतराद्यटनार्हत्वादाटकी तयाटिक्या । जायया सह प्रद्राणकः कुत्सितावस्थां प्राप्तश्चक्रस्या··· चाक्रायणः उषस्तिर्नामतो ह इभ्यग्रामे इभो हस्ती तमर्हतीतीभ्यो राजा हस्तिपको वा तस्य ग्राम इभ्यग्रामस्तस्मिन्नुवास उषितवान् ॥ १ ॥

**स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳहोवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥ २ ॥**

स उषस्तिर्ह अन्नार्थमटन् इभ्यं हस्त्यारोहं कुल्माषान्कुत्सितान्माषान् खादंतं भक्षयंतं बिभिक्षे याचितवान् । तमुषस्तिं ह इभ्य उवाच । किं यत् ये चये राशौ म इमे मम भाजने भोजनपात्रे उपनिहिता निक्षिप्ताः कुल्माषाः इतोस्माद्भाजनस्थादुच्छिष्टकुल्माषादन्ये न विद्यंते ॥ २ ॥

**एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳस्यादिति होवाच ॥ ३ ॥**

इत्युक्त उषस्तिरेतेषामिति कर्मणि षष्ठी । एतान् त्वया भक्ष्यमाणान् कुल्माषान्मे मह्यं देहीत्युवाचेत्युक्त इभ्यस्तान्कुल्माषानस्मै उषस्तये प्रददौ प्रदत्तवान् । हंतोच्छिष्टाः कुल्माषा भक्षिताश्चेदिदमनुपानमुदकं गृहाणेत्युक्त उषस्तिः यद्युदकमहं पास्यामि तदा त्वदीयमुच्छिष्टं वै मे मया पीतं स्यादिति होवाच ॥ ३ ॥

एवमुक्त इभ्य एव—

**न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति ॥ ४ ॥**

कुल्माषा अपि किं नोच्छिष्टाः स्विद्धितर्के इत्युवाच । एवमुक्त उषस्तिः इमान् कुल्माषानखादन्नभक्षयन्न वै नैवाजीविष्यं न जीविष्यामीत्युवाच । पानाभावेपि तुल्यं जीवनराहित्यमित्यत आह—काम इति । मे मम उदकपानं तु काम इच्छातः यथेष्टं लभ्यतेऽतस्तत्पाने नरकपातः स्यात् ॥ ४ ॥

**स ह खादित्वातिशेषाञ्जायाया आजहार साग्र**
**एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥**

स उषस्तिर्ह तांश्च खादित्वातिशेषानतिशिष्टान्कुल्माषान् जायायै आजहार आहृतवान् । सा च जायाग्रे कुल्माषप्राप्तेः पूर्वमेव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव तथापि स्त्रीस्वाभाव्यात्तान्कुल्माषान् पत्युर्हस्तात्प्रतिगृह्य निदधौ निक्षिप्तवती ॥ ५ ॥

**स ह प्रातः संजिहान उवाच यद्बतान्नस्य लभे-**
**महि धनमात्राꣳ राजासौ यक्ष्यते स मा सर्वैरा-**
**र्त्विज्यैर्वृणीतेति ॥ ६ ॥**

स भर्ता ह प्रातःकाले संजिहानः शयानः निद्रां वा परित्यजन् बतेति खिद्यमान उवाच । किं यद्यदि अन्नस्य स्तोकं लभेमहि तर्हि तद्भुक्त्वा वयं धनमात्रां धनलेशं लभेमहि । कुतः । राजासौ निकटे यक्ष्यते यागं कुरुते । ततः किं। स च मा मां राजा सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिः ऋत्विक्कर्मप्रयोजनाय वृणीतेति ॥ ६ ॥

**तं जायोवाच हन्त पत इम एव कुल्माषा इति**
**तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥**

तमेवमुक्तवन्तं पतिं प्रति जायोवाच । किं हंत तर्हि हे पते इमे त्वद्दत्ता एव कुल्माषास्तान्पत्नीदत्तान्पर्युषितान्कुल्माषान् खादित्वामुं राजयज्ञं ऋत्विग्भिर्विततं विस्तारितमेयायागात् ॥ ७ ॥

**तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स**
**ह प्रस्तोतारमुवाच ॥ ८ ॥**

तत्र गत्वोद्गातॄनास्ताव आगत्य स्तुवंत्यस्मिन्नित्यास्तावो देशविशेषस्तस्मिन्नास्तावे स्तोष्यमाणानामुपसमीपे उपविवेशोपविष्टः स उषस्तिः प्रस्तोतारमुवाच ॥ ८

**प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥**

हे प्रस्तोतर्या देवता प्रस्तावभक्तिमन्वायत्तानुगता चेत्तां देवतां प्रस्तावभक्तेरविद्वान्सन्प्रस्तोष्यसि मम समीपे तर्हि ते तवाविदुषो मूर्द्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति ॥ ९ ॥

**एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥ १० ॥ एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे ॥ ११ ॥ इति तृतीयस्य दशमः खण्डः ॥ १० ॥**

एवमेवोद्गातारं प्रतिहर्त्तारमुवाचेत्यादि समानम् । तेषु विनीतत्वं दर्शयति—ते हेति । ते प्रस्तोत्रादयः समारताः कर्मभ्य उपरताः संतो मूर्द्धपातभयात्तूष्णीमासांचक्रिरे ॥ १० ॥ ११ ॥ इति तृतीये दशमः खण्डः ॥ १० ॥

**अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥**

अथ तेषां तूष्णींभावानंतरं हैनमुषस्तिं प्रति यजमानो राजोवाच किं भगवंतं पूजावंतं वै अहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

**स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं वा अहमवित्त्यान्यानवृषि ॥ २ ॥**

इत्युक्तः स यजमान उवाच किं भगवंतं वै श्रुत्वाहमेभिः सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिः ऋत्विक्कर्मार्थे पर्यैषिषं पर्येषणं कृतवानस्मि । अन्विष्य भगवतो वै अहमवित्त्यालब्ध्यान्यान् ऋत्विजः अवृषि वृतवानस्मि ॥ २ ॥

**भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्तेभ्यो**

**धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥**

अद्यापि भगवान् तु एव मे मम सर्वैरार्त्विज्यैर्ऋत्विक्कर्मार्थमस्त्वित्युषस्तिस्तथास्त्वित्यङ्गीकृतवान्। अथैवमपि तर्हि तथापि एते पूर्ववृता एव प्रस्तोत्रादयो मया समतिसृष्टा अनुज्ञाताः संतः स्तुवतां कुर्वताम्। त्वया त्वेतत्कार्यं यावत्तु एभ्यः प्रस्तोत्रादिभ्यस्त्वं धनं दद्याः प्रयच्छसि तावन्ममापि दद्या इत्युक्तस्तथास्त्विति ह यजमान उवाच ॥ ३ ॥

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥**

अथोषस्तिवचसः श्रवणानन्तरं ह एनमुषस्तिं प्रस्तोता विनयेनोपससादोपजगाम। गत्वोक्तानुवादपूर्वकं पृच्छति–प्रस्तोतर्या देवतेति। उक्तार्थं। इत्येवं मा मां भगवानवोचत्कतमा सा देवता ॥ ४ ॥

इति पृष्ट उषस्तिः—

**प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥**

प्राणः परमात्मैवेति होवाच। कुतः। सर्वाणि ह वै इमानि स्थावरजंगमानि भूतानि प्राणमेवाभिसंलक्ष्य संविशंति प्रविशंति प्रलयकाले। तथोत्पत्तिकाले च प्राणमभ्युज्जिहते प्राणादेवोद्गच्छन्तीति परमात्मलिंगात् सैषा प्राणशब्दाभिधेया परमात्मदेवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यः प्रस्तवनं कृतवानसि विद्वत्संनिधौ सत्यां तर्हि तथोक्तस्य मूर्द्धा ते विपतिष्यतीत्यनेन प्रकारेण यथोक्तस्य ते तव तत्काल एव मूर्द्धा व्यपतिष्यदिति ॥ ५ ॥

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विप-**

**तिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥**

अथ हैनमुद्गातोपससादेत्यादि समानम् ॥ ६ ॥

**आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥**

आदित्यमुच्चैः सन्तं ऊर्ध्वं सन्तं गायंति शब्दयंति इमानि भूतानि ॥ ७ ॥

**अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥ अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥ एकादशः खण्डः ॥ ११ ॥**

अन्नमेवात्मानं प्रतिहरमाणानि जीवंति । तथा च प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः । अस्य फलं तु प्राणाद्यापत्तिः कर्मसमृद्धिर्वेति बोद्धव्यम् । पुनर्वचनं त्वादरार्थम् ॥ ८ ॥ ९ ॥ इति तृतीये एकादशः खण्डः ॥ ११ ॥

अन्नालाभादुक्तकष्टागतिर्मा भूदित्यन्नलाभायोपासनांतरं प्रतिजानीते—

**अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥**

अथान्नालाभप्रयासोक्त्यनन्तरं यतोऽन्नमपेक्षितमतोऽन्नलाभहेतुः शौवः श्वभिर्दृष्टः उद्गीथः सामविशेषः प्रस्तूयते इति शेषः । तत्र सुखप्रतिपत्त्यर्थमाख्यायिकामाह–तद्धेति । तत्तत्र बको ह नामतः दलभस्यापत्यं दाल्भ्यो

ग्लावो वा नामतः मित्राया अपत्यं मैत्रेयः स्वाध्यायार्थं ग्रामाद्बहिरुद्व्राजो-द्गतवान् ॥ १ ॥

**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपस-मेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥**

तस्मै ऋषयेऽनुग्रहार्थं स्वाध्यायेन तोषितः श्वा श्वेतः श्वेतः शुक्लः श्वा मुख्यप्राणदेवः श्वरूपं गृहीत्वा प्रादुर्बभूव। तं श्वानमन्ये क्षुद्राः श्वानो वागादयः उपसमीपमेत्योचुः किं अन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयतु। कुतः। यतो अशनायाम बुभुक्षिताः स्मो वै वयमिति ॥ २ ॥

एवमुक्तः—

**तान्होवाचेहैव माप्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार ॥ ३ ॥**

तान् शुन उवाच। किं यूयमिहास्मिन्नेव प्रदेशे प्रातःकाले मा मामुप-समीयातेति। दैर्घ्यं छांदसं प्रामादिकं वा। उपर्छेत। तत् तत्रैवं श्ववचने श्रुते सति ह बको दाल्भ्यो ग्लावो मैत्रेयः प्रतिपालयांचकार प्रातःकालप्रतीक्षणं कृतवान्। अतोऽवगम्यते तस्य स्वाध्यायपठनमन्नार्थमिति ॥ ३ ॥

स्वाध्यायेन देवतापरितोषं सदृष्टांतमाह—

**ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳ-रब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिंचक्रुः ॥ ४ ॥**

यथा ज्योतिष्टोमादौ बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा अध्वर्युप्रमुखा यजमानपंचमाः संरब्धाः संलग्नाश्च अन्योन्यस्य गृहीतवसनाश्चात्वालदेशं प्रति इदं सर्पणं यथा स्यात्तथा सर्पंति भ्रमणं कुर्वंति एवमेव ते श्वानो ह अन्योन्यस्य मुखे पुच्छं गृहीत्वा आससृपुरासृतवंतः। पश्चात्ते श्वानो ह समुपविश्य सम्यगुपविश्य हिंचक्रुर्हिङ्कारं गानं कृतवन्तः ॥ ४ ॥

कथं—

**ओ३मदा३मों३पिबा३मों३देवो वरुणः प्रजापतिः**

**सविताऽन्नमिहाऽऽहरदन्नपतेऽन्नमिहाहराऽऽहरो-ऽमिति ॥ ५ ॥ तृतीयस्य द्वादशः खण्डः ॥१२॥**

ॐकारोत्र गानार्थः। अदामाशनङ्करवाम पिबाम पानं करवाम। द्योतनाद्देवो जगतो वर्षणाद्वरुणः प्रजानां पालनात्प्रजापतिः सर्वस्य जगतः प्रसवितृत्वात् सवितान्नमिह प्रकृतप्रदेशेऽस्मभ्यमाहरदाहरतु। अन्नस्य प्रसवितृत्वात् हे अन्नपते अन्नमिहाहराहरेत्यभ्यास आदरार्थः। इत्येवं हिंचक्रुरित्यर्थः ॥ ५ ॥ इति तृतीये द्वादशः खण्डः ॥ १२ ॥

भक्त्युपासनमुक्त्वा स्तोभाक्षरोपासनमाह—

**अयं वाव लोको हाउकारो वायुर्हाइकारश्च-न्द्रमा अथकार आत्मेहकारोऽग्निरीकारः ॥ १ ॥**

अयं पृथिवीलोको वाव एव हाउकारः पृथिवीलोकदृष्ट्या हाउकारः स्तोभ उपास्यः। उक्तत्वादेव न सामान्याकांक्षा। तथात्वे च तेषामस्माभिः छान्दोग्यार्थप्रकाशिकायामुक्तत्वान्नेहोच्यते विस्तृतिभयात्। वायुः हाइकारः स्तोभ इति चिंतनीयं। चन्द्रमा अथकारः। स्तोभः आत्मा प्रसिद्ध इहकारः स्तोभः। अग्निः ईकारः ॥ १ ॥

**आदित्य ऊकारो निहव एकारो विश्वेदेवा औ-होयिकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २ ॥**

आदित्यः ऊकारः निहवः आह्वानं एकारः स्तोभः विश्वेदेवा औहोयिकारः प्रजापतिः हिंकारः प्राणः स्वरः स्तोभः अन्नं यास्तोभः वाक्स्तोभो विराट् ॥२॥

**अनिरुक्तस्त्रयोदशस्तोभः संचरो हुंकारः ॥ ३ ॥**

अनिरुक्तः अव्यक्तः कारणात्मा हुंकारस्त्रयोदशसंख्यापूरकः स्तोभः। स च संचरः शाखाभेदेन हुंकारो हुम्कारो वेति विकल्पमानस्वरूपः ॥ ३ ॥

स्तोभोपासनफलमाह—

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳसाम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

*इति छान्दोग्यब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥ उपनिषदि प्रथमः ॥ १ ॥*

एतदुक्तार्थम् । य एतां यथोक्तां एवमुक्तरीत्या साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेदोपास्तेऽस्मै उपासकाय । अभ्यासः पूर्ववदध्यायसमाप्त्यर्थो वा ॥ ४ ॥ इति तृतीये त्रयोदशः खण्डः ॥ १३ ॥

यस्मिन्नुद्गीथगामिन्यमृतरसतमत्वादिभावैरुपेते
प्राणव्यानर्कदृष्टी रविनयननिविष्टे स्वरान्नेक्षणं च ॥
कृत्वा विप्राः क्रियायामधिकमपि फलं कर्ममात्राल्लभन्ते
तस्योंकारस्य वाच्यं हृदि गतममलं भावयेदात्मतत्त्वम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानंदाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ॥

सामावयवोपासनमुक्त्वा फलार्थिनां समस्तसामोपासनमाह—

**ॐ समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥**

समस्तस्य सर्वावयवविशिष्टस्य पांचभक्तिकस्य साप्तभक्तिकस्य च खलु साम्नः उपासनं साधु शोभनं समस्तसाम्नि साधुगुणदृष्टिं कुर्यादिति फलितार्थः। कुतोऽवगम्यते लोके साधु शोभनं तत्राह—यत्खलु लोके साधु शोभनं तत्सामेत्याचक्षते कुशलाः यदसाधु तदसामेत्याचक्षते ॥ १ ॥

किंच—

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥**

तत्तत्रैवं साध्वसाधुविवेककरणे उत उपायविशेषमप्याहुस्तज्ज्ञाः । किम् । यस्माद्यस्यासाधुत्वप्राप्त्याशंका स एनं राजानं सामंतं वा साम्ना सामनीत्योपागादुपगतवानिति यत्तत्र व्यवहारे शोभनकार्यदर्शने सत्ययं साधुना शोभनमार्गेणैनमुक्तमुपागादित्याहुः । यत्र पुनरसाम्नैनमुपागादिति तत्तत्र व्यवहारे बंधनाद्यशुभकार्यं पश्यंतोऽसाधुनैनमुपागादित्येवाहुः ॥ २ ॥

एवं कार्यगम्यं साधुत्वाद्युक्त्वा स्वानुभवगम्यं साधुत्वाद्याह—

**अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥**

अथानंतरं उत स्वात्मनि हर्षहेतौ जाते सति नोऽस्माकं साम बतेति हृष्टाः संतः आहुः । अस्यैव विवरणं यत्साधु भवति साधु बतेत्येव तत्तत्राहुः । विपर्यये जातेऽसाम नो बतेति खिद्यमाना आहुः । अस्यैव विवरणं यदस्यासाधु भवत्यसाधु बतेत्येव तत्तत्राहुः ॥ ३ ॥

साधुदृष्ट्या समस्तसामोपासनफलमाह—

**स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥ इति चतुर्थस्य प्रथमः खण्डः ॥ १ ॥**

स यः कश्चिदेवमुक्तप्रकारेण साधुगुणमेतत्समस्तं साम विद्वानुपास्ते एनमुपासकं प्रति साधवो धर्माः श्रुत्याद्यविरुद्धाः आ च गच्छेयुः आगच्छेयुरिति यत्तदभ्याशो ह क्षिप्रमेव । न केवलमागच्छेयुरेवापि तु उप च नमेयुश्च भोग्यत्वेनोपतिष्ठेयुश्चेत्यर्थः ॥ ४ ॥ इति चतुर्थे प्रथमः खंडः ॥ १ ॥

**लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥**

तत्र लोकेषु पृथिव्यादिषु पंचविधं पंचभक्तिभेदेन पंचप्रकारकं साधुदृष्टिविशिष्टं समस्तं सामोपासीत । लोकदृष्ट्या पंचविधं सामोपासीतेत्यर्थः । कथं । पृथिवी हिंकारः हिंकारभक्तिः पृथिवीदृष्ट्योपास्या । अग्निः प्रस्तावः प्रस्तावभक्तिरग्निदृष्ट्योपास्या । अंतरिक्षमुद्गीथभक्तिः । आदित्यः प्रतिहारः । द्यौर्निधनं द्युदृष्ट्या निधनभक्तिरुपास्या । इत्येवमूर्ध्वेषु ऊर्द्ध्वमुखव्यवस्थितलोकदृष्ट्या सामोपासनमुक्तं ॥ १ ॥

**अथावृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

अथोक्तोपासनानंतरं आवृत्तेष्ववाङ्मुखेषु द्युलोकादिषु पंचविधसामोपासनमुच्यते । कथं द्यौर्हिंकार इत्यादि पूर्ववत् ॥ २ ॥

एतदुपासनफलमाह—

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥ ३ ॥**

**इति चतुर्थस्य द्वितीयः खण्डः ॥ २ ॥**

असै उपासकायोर्ध्वा आवृत्ताश्च प्राणिनां गत्यागतिविशिष्टा लोका भोग्यत्वेन कल्पंते समर्था भवंति य एवमुक्तरीत्या विद्वान् लोकेषु पंचविधं समस्तं सामोपास्ते ॥ ३ ॥ इति चतुर्थे द्वितीयः खण्डः ॥ २ ॥

उक्तलोकस्थितेर्वृष्टिनिमित्तत्वात्तदनंतरं वृष्टिदृष्ट्या पंचविधं सामोपासनमाह—

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

वृष्टौ पंचविधं सामोपासीतेत्यादि समानम् ॥ १ ॥

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥**

**इति चतुर्थस्य तृतीयः खण्डः ॥ ३ ॥**

उद्गृह्णाति तन्निधनं यदुद्ग्रहणं वृष्ट्युपसंहरणं तन्निधनम् । अस्य फलमाह—वर्षतीति । असै उपासकाय स्वेच्छातः पर्जन्यो वर्षति वर्षयतिच । शेषं सुबोधम् ॥ २ ॥ इति चतुर्थ तृतीयः खंडः ॥ ३ ॥

वृष्टिहेतुकाब्दृष्ट्या तदुपासनमाह—

**सर्वास्वप्सु पञ्चविधꣳसामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥**

मेघो यत्संप्लवते एकीभावेनेतरेतरं घनीभवति उन्नतो भवति ॥ १ ॥

**न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वानेता-**
**वीस्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ इति चतु-**
**र्थस्य चतुर्थः खण्डः ॥ ४ ॥**

स उपासको न ह अप्सु उदके प्रैति म्रियतेऽनिच्छन्। अप्सुमांश्च मरुस्थलीष्वपि यथेष्टोदकवान्भवति। शेषं सुबोधम् ॥ १ ॥ २ ॥ इति चतुर्थे चतुर्थः खंडः ॥ ४ ॥

अंबुहेतुकऋतुदृष्ट्या तदुपासनमाह—

**ऋतुषु पञ्चविधꣳसामोपासीत वसन्तो हिंकारो**
**ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो**
**हेमन्तो निधनम् ॥ १ ॥ कल्पन्ते हास्मा ऋतव**
**ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ**
**सामोपास्ते ॥ २ ॥ इति पञ्चमः खण्डः ॥ ५ ॥**

कल्पंते भोग्यत्वेन व्यवतिष्ठंते ह अस्मै उपासकाय ऋतवो वसंतादयः। ऋतुमानार्त्तवैश्च भोगैः संपन्नो भवति। समानमन्यत् ॥ १ ॥ २ ॥ इति चतुर्थे पञ्चमः खंडः ॥ ५ ॥

सम्यग्व्यवस्थितऋतुहेतुकपशुदृष्ट्या तदुपासनमाह—

**पशुषु पञ्चविधꣳ सामोपासीताजा हिंकारोऽवयः**
**प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो**
**निधनम् ॥ १ ॥ भवन्ति हास्य पशवः पशुमा-**
**न्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ**
**सामोपास्ते ॥ २ ॥ इति षष्ठः खण्डः ॥ ६ ॥**

अजाः छागाः अवयो मेषाः पशुमान्भवति पशुफलैश्च भोगादिभिर्युज्यते। शेषं सुबोधम् ॥ १ ॥ २ ॥ इति चतुर्थे षष्ठः खंडः ॥ ६ ॥

पशुप्रसूतपयोघृतादिहेतुकप्राणस्थितिरित्यतस्तदनंतरं प्राणदृष्ट्या तदुपासनमाह—

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो**
**हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो**
**मनो निधनं परोवरीयाꣳसि वा एतानि ॥ १ ॥**

प्राणेषु घ्राणादीन्द्रियेषु पंचविधं परोवरीयः परं परमुत्तरोत्तरं वरीयस्त्वगुणवत् घ्राणादिदृष्टिविशिष्टं सामोपासीत । प्राणानां कथं तद्गुणत्वमित्यतआह—परोवरीयाꣳसि वा एतानीति । एतानि घ्राणादीन्द्रियाणि परोवरीयांसि उत्तरोत्तरं वरीयस्त्वगुणविशिष्टानि वै प्रसिद्धम् ॥ १ ॥

**परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥ इति सप्तमः खण्डः ॥ ७ ॥**

परोवरीयो हास्येति फलोक्तिः सुबोधा । इत्येवं खलु पञ्चविधस्य साम्न उपासनमुक्तमित्यर्थः ॥ २ ॥ इति चतुर्थे सप्तमः खण्डः ॥ ७ ॥

**अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिंकारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥**

अथानन्तरं सप्तविधस्य साधुदृष्टिविशिष्टस्योपासनमारभ्यते । वाचि सप्तविधं वाक्पदवाच्यशब्दसामान्यदृष्ट्या सप्तविधं साप्तभक्तिकं सामोपासीत । कथं यत्किंच शब्दसामान्यस्य हुमिति शब्दविशेषः स हिंकारः भक्तिविशेषः । हुमितिशब्ददृष्ट्या हिंकारश्चिन्तनीयः । यत्प्र इति शब्दः स प्रस्तावभक्तिः । यत् आइति शब्दः स आदिः ॥ १ ॥

**यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥**

यत् उत् इति शब्दः स उद्गीथः । यत्प्रतीतिशब्दः स प्रतिहारः । यत् उपइति शब्दः स उपद्रवः । यत् नीतिशब्दः तन्निधनं भक्तिः ॥ २ ॥

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते ॥ ३ ॥ इति अष्टमः खण्डः ॥ ८ ॥**

दुग्धेऽस्मै इत्युपासनफलवाक्यमुक्तार्थम् ॥ ३ ॥ इति चतुर्थेऽष्टमः खंडः ॥ ८ ॥

वाचकशब्ददृष्ट्या सामोपासनमुक्त्वा वाच्यदृष्ट्या तदाह—

**अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामं**

**सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥**

कुत आदित्यदृष्ट्या सप्तविधं सामोपास्यमित्यत आह—सर्वदेति । येनादित्यः सर्वदा समो वृद्धिक्षयाभावात्तेन हेतुना साम । किञ्च येन मां प्रति मां प्रतीति सर्वभूताभिमुखतया सर्वेण समः तेन च साम ॥ १ ॥

तस्मात्—

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिंकुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

तस्मिन्नादित्ये इमानि वक्ष्यमाणानि सर्वाणि भूतानि प्राणीनि पुरोदयाद्यवयवविभागेनान्वायत्तान्यनुगतान्यादित्यमुपजीव्य स्थितानीति विद्याज्जानीयात् । कथमेतत् । तस्यादित्यस्योदयात्पुरः पूर्वं यद्रूपं स हिंकारः । तद्धिंकारभक्त्यात्मकं रूपमस्यादित्यसाम्नः पशवो गवादयोऽन्वायत्ता अनुगताः । तद्भक्तिरूपमुपजीवन्तीत्यर्थः । अत्र प्रमाणमाह—तस्मादिति । हि यस्मादेतस्यादित्याख्यस्य साम्नो हिंकारभाजिनो हिंकारभक्तिभजनशीलाः पशवस्तस्मात्ते पशवः प्रागुदयात् हिंकुर्वन्ति ॥ २ ॥

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥**

अथ यत्प्रथमोदिते सवितरि रूपं स प्रस्तावः तत् प्रस्तावभक्त्यात्मकमस्यादित्यसाम्नो रूपं मनुष्या अन्वायत्ताः । कुतः । हि यस्मादेतस्यादित्यसाम्नः प्रस्तावभाजिनो मनुष्यास्तस्मात्ते मनुष्याः प्रस्तुतिकामाः प्रशंसाकामाः परोक्षस्तुतिकामाः ॥ ३ ॥

**अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥**

अथ रश्मीनां जगन्मंडलेन गवां वा वत्सेन सह संगवः संबन्धो यस्यां वेलायां भवति सा संगववेला तस्यां संगववेलायां यदादित्यरूपं स आदिरोंकाराख्या भक्तिस्तदादिभक्त्यात्मकमस्यादित्यसाम्नो रूपं वयांसि पक्षिणोऽन्वायत्तानि । कुतः । हि यस्मादेतस्यादित्यसाम्नो वयांसि पक्षिण आदिभाजीनि आद्याख्यभक्तिभजनशीलानि तस्मात्तानि वयांस्यंतरिक्षे गगने अनारंभणानि निरालंबान्यात्मानं शरीरमादाय परिपतंति प्लवन्ते ॥ ४ ॥

**अथ यत्संप्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥**

अथ यत्संप्रति ऋजुमध्यंदिने अन्यूनातिरिक्तमध्याह्ने आदित्यस्य रूपं स उद्गीथस्तदुद्गीथभक्त्यात्मकमस्यादित्यस्य रूपं देवा अन्वायत्ताः । कुतः । हि यस्माद्देवा एतस्यादित्यसाम्न उद्गीथभाजिनस्तस्मात्तेदेवाः सत्तमाः प्राजापत्यानां प्रजानां मध्ये विशिष्टतमाः ॥ ५ ॥

**अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥**

अथ यन्मध्यंदिनादूर्ध्वमपराह्णात्प्राक्सवितृरूपं स प्रतिहारस्तत्प्रतिहारभक्त्यात्मकमस्यादित्यसाम्नो रूपं गर्भाः जाठरवर्त्तिनः प्राणिनोऽन्वायत्ताः । कुतः । हि यस्माद्गर्भा एतस्यादित्यसाम्नः प्रतिहारभक्तिभाजिनस्तस्मात्ते गर्भा योनेरुपरिष्टात् जठरं प्रति प्रतिहृताः संतो नावपद्यन्ते नाधः पतन्ति ॥ ६ ॥

**अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्ष१ँ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥**

अथ यदपराह्णादूर्ध्वमस्तमयात्प्राक् रवेरूपं स उपद्रवस्तदुपद्रवभक्त्यात्मकमस्यादित्यस्य रूपमरण्ये भवा आरण्याः पशवोऽन्वायत्ताः । कुतः । हि यस्मादेतस्यादित्यसाम्न उपद्रवभक्तिभाजिनः पशवस्तस्मात्ते अरण्यादिषु पुरुषरूपं दृष्ट्वा भीताः संतः कक्षं गुल्मवल्ल्यादिश्वभ्रं गर्त्तं गुहां प्रत्युपद्रवंत्युपगच्छन्ति ॥ ७ ॥

**अथ यत्प्रथमा स्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥ इति नवमः खण्डः ॥ ९ ॥**

अथ यत्प्रथमास्तमिते अदर्शनं जिगमिषति सवितरि यद्रूपं तन्निधनं तन्निधनभक्त्यात्मकमस्यादित्यसाम्नो रूपं पितरोऽर्यमादयोऽन्वायत्ताः । कुतः । हि यस्माज्जे पितर एतस्यादित्यसाम्नो निधनभक्तिभाजिनस्तस्मात्तान् पितॄन्निदधति । पितृपितामहादिरूपेण दर्भेषु निक्षिपन्ति तदर्थमत्र पिण्डान् स्थापयन्ति । खल्वित्याऽमुमादित्यं सप्तविधमुक्तविधया सप्तधा विभक्तं सामोपास्ते तस्य तदापत्तिः फलमिति वाक्यशेष इत्यर्थः ॥८॥ इति चतुर्थे नवमः खण्डः॥९॥

अथ भक्तिनामाक्षरोपासनमाह—

**अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपासीत । हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥**

अथादित्यादिसामोपासनानन्तरं खलु आत्मसंमितं मृत्युमोक्षहेतुत्वेन परमात्मना संमितं तुल्यमतिमृत्यु मृत्स्वतिक्रमणसाधनं सप्तविधं सामोपासीत । कथं । हिंकार इति त्र्यक्षरं प्रथमभक्तिनाम प्रस्ताव इति च त्र्यक्षरं तत्प्रस्तावभक्तिनाम हिंकारनाम्ना समं समसंख्याकम् ॥ १ ॥

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥**

आदिरिति द्व्यक्षरं नाम प्रतिहार इति चतुरक्षरं ततः तस्मात्प्रतिहारनामाक्षरादेकमक्षरमपच्छिद्य इहादिभक्तिनामाक्षरयोः प्रक्षिप्ते सति तदादिभक्तिनाम प्रतिहारभक्तिनाम्ना समम् ॥ २ ॥

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥**

उद्गीथ इति त्र्यक्षरं नाम उपद्रव इति चतुरक्षरम् । एतद्द्वयं त्रिभिरक्षरैः

संख्यया समं भवति । एकं त्वक्षरमतिशिष्यतेऽवशिष्यते तदवशिष्टमक्षरमेकमपि सत् त्र्यक्षरं चिंतनीयमतस्तदेकमप्यक्षरं पूर्वेण समम् ॥ ३ ॥

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥**

निधनमिति त्र्यक्षरं तन्निधनं नाम पूर्वेण सममेव भवति । तानि ह वै एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः संपन्नानि ॥ ४ ॥

**एकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥**

तत्रैकविंशत्यक्षरसंख्ययादित्यं मृत्युमाप्नोति । कुतः । यस्मादितोऽस्माल्लोकादसावादित्य एकविंशो वै एकविंशतिसंख्यापूरणः 'द्वादश वै मासाः पञ्चर्त्तवस्त्रयो लोका असावादित्य एकविंशः' इति श्रुत्यंतरात् । द्वाविंशेनाक्षरेणादित्यान्मृत्योः परं स्थानं जयति प्राप्नोति । तदादित्यात्परं स्थानं नाकं । कं सुखं तन्न भवतीत्यकं तन्न विद्यते यत्र तन्नाकं सुखं तत्परं स्थानं विशोकं मानसदुःखरहितं ॥ ५ ॥

उक्तमेव संक्षिप्य बुद्धिसौकर्यार्थमाह—

**आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपास्ते सप्तविधꣳ सामोपास्ते ॥ ६ ॥ इति दशमः खण्डः ॥ १० ॥**

इहैकविंशतिसंख्ययादित्यस्य जयमाप्नोति । आदित्यजयाच्चानंतरं द्वाविंशतिसंख्यया परो जयोऽस्योपासकस्य भवति । कस्य य एतदेवमित्याद्युक्तार्थं । अभ्यासः सप्तविधसामोपास्तिसमाप्त्यर्थः ॥६॥ इति चतुर्थे दशमः खण्डः॥१०॥

विना नामग्रहणं सामोपासनमुक्त्वा गायत्रादिसामोपासनमाह—

**मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥**

तस्योपासनस्य फलमाह—

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी**

**भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम् ॥ २ ॥ इत्येकादशः खण्डः ॥ ११ ॥**

य एतद्गायत्रं सामैवमुक्तरीत्या प्राणेषु प्रोतं वेदोपास्ते स उपासकः प्राणी प्राणैरविकलो भवति । सर्वं शतवर्षपरिमितं आयुरेति प्राप्नोति । ज्योगुज्ज्वलः स्वपरोपकारसमर्थः सन् जीवति । प्रजया पशुभिश्च महान्भवति । कीर्त्या च महान् भवति । एतदुपासनांगभूतं व्रतमाह—महामना इति । अक्षुद्रचित्तः स्यात्तदेव व्रतं गायत्रसामोपासकस्येत्यर्थः ॥२॥ इति चतुर्थे एकादशः खण्डः ॥११॥

समग्रप्राणस्यैव मंथनकर्तृत्वसंभवात्प्राणदृष्ट्यनन्तरं मंथनादिदृष्टिं रथन्तरे साम्नि विदधाति—

**अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥**

हिंकारेऽग्न्यभिमंथनदृष्टिः कर्त्तव्या । अग्नेरुपशमः सावशेषनाशः । संशमो निरवशेषनाशः । उभयत्रापि निधनदृष्टिः कर्त्तव्या ॥ १ ॥

**स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥ इति द्वादशः खण्डः ॥ १२ ॥**

ब्रह्मवर्चसी वृत्तस्वाध्यायतेजो ब्रह्मवर्चसं तद्वान्ब्रह्मवर्चसी । अन्नादो दीप्ताग्निः । न प्रत्यङ्ङग्निं अग्नेरभिमुखो नाचामेन्न भक्षयेत् । न निष्ठीवेत् श्लेष्मनिरसनं च न कुर्यात् । समानमन्यत् ॥२॥ चतुर्थे द्वादशः खण्डः ॥१२॥

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोर्मंथनसामान्यान्मंथनादिदृष्ट्यनन्तरं वामदेव्ये साम्नि मैथुन्यदृष्टिं विदधाति—

**उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रिया सह शेते**

**स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥**

उपमन्त्रयते स्त्रिया सह संकेतं करोति। पशुकर्मार्थं ज्ञपयते वस्त्रादिना प्रीणयति स्त्रियं। स्त्रिया सह शेते एकपर्यंकमारोहति। प्रति स्त्रिया सह शेते। कालं गच्छति मिथुनकर्मणा कालातिक्रमणं भवति। पारं गच्छति तत्कर्मणः समाप्तिं गच्छति ॥ १ ॥

**स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न कांचन परिहरेत्तद्व्रतम् ॥ २ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

मिथुनीभवत्यविधुरो भवति। प्रजायते प्रजोत्पद्यते। अमोघरेता भवति। न काञ्चन काञ्चिदपि स्त्रियं समागमार्थिनीं स्वत उपगतां परिहरेत्। यावदुपासनं न तु सर्वदेत्यर्थः ॥ २ ॥ इति चतुर्थे त्रयोदशः खण्डः ॥ १३ ॥

आदित्यस्य प्रजाप्रसवहेतुत्वात्तद्धेतुमैथुन्यदृष्ट्यनंतरमादित्यदृष्टिं बृहत्साम्नि विदधाति—

**उद्यन्हिंकार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तंयन्निधनमेतद्बृहदादित्ये प्रोतम् ॥ १ ॥ स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥ इति चतुर्दशः खण्डः ॥ १४ ॥**

उद्यन्सविता अस्तंयन् अस्तं गच्छन् तेजस्वी स्वगात्रकांतिमान् ॥ १ ॥ ॥ २ ॥ इति चतुर्थे चतुर्दशः खण्डः ॥ १४ ॥

आदित्यकार्यपर्जन्यदृष्टिं वैरूप्यसाम्नि विदधाति—

**अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति**

**स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥**

अभ्राणि अब्भरणावस्थानि मेघजातानि । मेघ उदकसेकत्वावस्थः ॥ १ ॥

**स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाँश्च सुरूपाँश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ २ ॥ इति पञ्चदशः खण्डः ॥ १५ ॥**

सरूपान् समानरूपान् विरूपान् · विसदृशरूपान् अजाविप्रभृतीन्पशूनवरुन्धे प्राप्नोति ॥ २ ॥ इति चतुर्थे पंचदशः खण्डः ॥ १५ ॥

पर्जन्यदृष्टिकार्यं ऋतुदृष्टिं वैराजसाम्नि विदधाति—

**वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तून्न निन्देत्तद्व्रतम् ॥ २ ॥ इति षोडशः खण्डः ॥ १६ ॥**

वसन्तो हिंकार इति सुबोधम् ॥ १ ॥ २ ॥ चतुर्थे षोडशः खण्डः ॥ १६ ॥

सम्यग्वृत्तऋतुकार्यलोकदृष्टिं शाक्वरेः साम्नि विदधाति—

**पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥**

शक्वर्य इति नित्यं बहुवचनांतम् ॥ १ ॥

**स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥ इति सप्तदशः खण्डः ॥ १७ ॥**

लोकीभवति लोकफलेन संयुज्यते ॥२॥ इति चतुर्थे सप्तदशः खण्डः १७
लोककार्यपशुदृष्टिं रैवते साम्नि विदधाति—

**अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥ १ ॥ स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥ इत्यष्टादशः खण्डः ॥ १८ ॥**

रेवत्य इति नित्यं बहुवचनांतम् ॥१॥२॥ इति चतुर्थेऽष्टादशः खण्डः १८
पशुदृष्ट्यनंतरं लोमाद्यंगदृष्टिं यज्ञायज्ञीये साम्नि विदधाति—

**लोम हिंकारस्त्वक्प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥**

अंगेषु देहावयवेषु ॥ १ ॥

**स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥**

अंगी भवति सर्वांगो भवति नांगेन हस्तपादादिना विहूर्छति न कुटिलो विकलो भवति । संवत्सरं मज्ज्ञो मांसानि नाश्नीयान्मरिष्यन्नपि यावज्जीवं मज्ज्ञो नाश्नीयादिति वा व्रतमित्यर्थः ॥ २ ॥ इति चतुर्थे एकोनविंशः खंडः ॥ १९॥
अंगप्रतिष्ठिताग्न्यादिदृष्टिं राजने साम्नि विदधाति—

**अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥ १ ॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्यो-**

**...महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥ २ ॥ इति विंशः खण्डः ॥ २० ॥**

देवतानामग्न्यादीनां सलोकतां समानलोकत्वं सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावं एकदेहदेहित्वं। अत्र वाशब्दो लुप्तो द्रष्टव्यः समुच्चयासंभवादियर्थः ॥ १ ॥ २ ॥ इति चतुर्थे विंशः खण्डः ॥ २० ॥

देवताकार्यत्रयीविद्यादृष्टिं सामसामान्ये विदधाति—

**त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम तत्सर्वस्मिन्प्रोतम् ॥१॥ स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳ ह भवति ॥२॥**

एतत्सामसामान्यमात्रं नामविशेषानिर्देशात् । सर्वं ह सर्वेश्वरो भवति॥१॥२॥

अत्र मंत्रं संवादयति—

**तदेष श्लोकः । यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥**

तत्तस्मिन्नुक्तेर्थे एष श्लोको मंत्रोऽप्यस्ति । यानि त्रीणि त्रीणि त्रयीविद्या-...ीनि पंचधा पंचप्रकारेण हिंकारादिविभागैः प्रोक्तानि तेभ्यः पंचत्रिकेभ्यो ...यायो महत्तरं परं व्यतिरिक्तमस्यैव व्याख्यान्यद्वस्त्वंतरं नास्ति न विद्यते ...त्रैव सर्वस्यांतर्भावात् ॥ ३ ॥

अतः—

**यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥४॥ इत्येकविंशः खण्डः ॥ २१ ॥**

यस्तथोक्तं सर्वात्मकं साम वेद सर्वं वेद सर्वज्ञो भवति। किंच सर्वा दिशः ...देक्स्थाः पुरुषा अस्मै एवंविदे बलिमुपहरंति प्रापयंति। सर्वमस्मि भवामीत्येव-...मेतत्सामोपासीत तदेवास्य व्रतम् । द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ ४ ॥ ...ति चतुर्थे एकविंशः खण्डः ॥ २१ ॥

उक्तसामोपासनप्रसंगेन कर्मफलोपयोगि स्वरादिविज्ञानमुपदिशति—

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवादिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेकं वर्जयेत् ॥ १ ॥**

साम्नः संबन्धि विशेषेण नर्दः स्वरविशेष ऋषभकूजितसमो यस्मिन् गानेऽस्ति तद्विनर्दि उद्गानमहं वृणे पशव्यं पशुभ्यो हितमिति । अग्नेरग्निदैवत्यमुद्गीथ उद्गानं अनिरुक्त ईदृग्विधोऽयमित्येवं विशेषतो न निरुक्तः स्वरः प्रजापतेः प्रजापतिदैवत्यः । स्पष्टनिरुक्तः स्वरविशेषः सोमस्य । मृदु कोमलं श्लक्ष्णमनवच्छिन्नं वा गानं वायोः । श्लक्ष्णं बलवच्च प्रयत्नाधिक्यनिर्वर्त्यं गानमिन्द्रस्य । क्रौञ्चपक्षिनिनदसमं गानं बृहस्पतेः । अपध्वान्तं भिन्नकांस्यसमं गानं वरुणस्य । तानेतान्सर्वान्स्वरविशेषानुपसेवेत । परं तु वारुणं त्वेवैकं वर्जयेत् १

स्वरविशेषविज्ञानपूर्वकोद्गानकाले चिन्तनीयमाह—

**अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥**

अमृतत्वं देवेभ्योऽहमागायानि साधयामीत्येवं ध्यायन्नागायेत् स्तुवीत । आशा प्रार्थना प्रार्थितं । शेषं सुबोधं । उक्तमेव विशदीकुर्वन्नुपसंहरति इत्येतानीति । इत्येवमुक्तान्येतान्यमृतत्वादीनि मनसा ध्यायन्नप्रमत्तः स्वरोष्मादिभ्यः प्रमादमकुर्वन्स्तुवीत ॥ २ ॥

उद्गातुः केनाप्याक्षिप्तस्य प्रतीकारज्ञानाय स्वरादिदेवताज्ञानमुपदिशति—

**सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

सर्वे स्वरा अकारादय इन्द्रस्य बलकर्मणः प्राणस्यात्मानो देहावयवस्था-

नीयाः। सर्वे ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्य वात्मानः स्वरूपभूताः। सर्वे स्पर्शाः कादयो मावसानाः व्यञ्जनानि मृत्योर्यमस्यात्मानः स्वरूपभूताः। अथाक्षेपप्रतीकारोपायमाह—तं यदीति। तमेव स्वरदेवताविदुद्गातारं यदि कश्चित्स्वरेषूपालभेत स्वरस्त्वयादुष्टः प्रयुक्त इत्युपालम्भं कुर्यात्तदैनमुपलंभकर्त्तारं प्रतिब्रूयात्। किम्। स्वरान्प्रयुञ्जानोऽहमिन्द्रं प्राणं स्वरेश्वरं शरणमाश्रयं प्रपन्नः प्राप्तोऽभूवमतः स इन्द्रो यत् वक्तव्यं तत्त्वा त्वां प्रतिवक्ष्यत्युत्तरं दास्यतीति॥ ३॥

**अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात्॥ ४॥**

पेक्ष्यतीति। पेक्ष्यति पेषणं चूर्णं करिष्यति। धक्ष्यति भस्मीकरिष्यति। समानमन्यत्॥ ४॥

देवताज्ञानबलेनोद्गात्रापि न प्रमत्तेन भवितव्यमिति शिक्षयन् चिंतनीयमाह—

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति॥५॥ इति द्वाविंशः खण्डः॥२२**

सर्वे स्वरा घोषवंतो नादवंतो बलवंतः प्रयत्नाधिक्योपेताः। किंच इंद्रे प्राणात्मनि बलं ददाति आदधानीत्येवं चिंतयेदिति शेषः। अग्रस्ता अंतराऽप्रवेशिताः अनिरस्ताः बहिरप्रक्षिप्ताः विवृताः विवृतप्रयत्नोपेताश्च लेशेनांशेन शनकैरनभिनिहिता अनभिक्षिप्ता अतिद्रुतोच्चरणेन वर्णो वर्णांतरे यथा निक्षिप्तो न भवति तथा वक्तव्याः समानमन्यत्॥ ५॥ इति चतुर्थे द्वाविंशः खण्डः॥ २२॥

अधिकृताधिकाराण्यंगावबद्धान्युपासनान्युक्त्वा स्वतंत्राधिकारिगोचरमुपासनं विधातुं तावत्कर्मफलस्य क्षयिष्णुत्वं वक्तुं धर्मान्विभजते—

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथम-स्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्म सꣳस्थोऽमृतत्वमेति ॥१॥**

त्रयस्त्रिसंख्याकाः । धर्मस्य स्कंधा विभागाः । तत्र यज्ञोऽग्निहोत्रादिः । अध्ययनं नियमपूर्वकं वेदग्रहणादि । दानं बहिर्वेदि द्रव्यदानमित्येष प्रथम एको धर्मस्कंधो गृहस्थात्मना निर्दिश्यते । तपः कृच्छ्रचांद्रायणादिरेव द्वितीयो वानप्रस्थात्मना निर्दिश्यते । ब्रह्मचारी आचार्यकुलवासी आचार्यकुले वसन-शील उपकुर्वाणोऽपि भवत्यतो विशिनष्टि । अत्यंतं यावज्जीवं भिक्षा-टनादिनियमपूर्वकमात्मानं देहमाचार्यकुले अवसादयन् क्षिपन्नाचार्यकुलवासी नैष्ठिक एव तृतीयो धर्मस्कंधः । सर्वे एते त्रयोप्याश्रमिणः पुण्यो लोको येषां ते पुण्यलोका भवंति । संन्यासिनां तूक्तधर्मफलेभ्यो भिन्नं फलमाह—ब्रह्मसंस्थ इति । ब्रह्मणि परमात्मनि सम्यगव्यभिचारिणी स्थितिर्निष्ठा यस्य परब्रह्मसाक्षा-त्कारवतः स ब्रह्मसंस्थः परिव्राडेवामृतत्वं पुण्यफलविलक्षणं मोक्षमेति प्राप्नोति । यद्वा प्रणवप्रतीकब्रह्मसंस्थः तदुपासनां कुर्वन्परिव्राण्मात्रः क्रमेणामृतत्वमेतीत्यर्थः प्रणवप्रकरणादवगम्यते ॥ १ ॥

तमुपास्यं प्रणवं सर्वसारत्वकथनेन महीकुर्वन् तदुत्पत्तिमाह—

**प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥**

प्रजापतिः लोकानुद्दिश्य तेषु सारजिघृक्षयाभ्यतपदभिध्यानं कृतवान् । तेभ्योभितप्तेभ्यो लोकेभ्यः सारभूता त्रयीविद्या संप्रास्रवत् प्रजापतेर्मनसि प्रत्यभात् । तां च त्रयीविद्यां पूर्ववदभ्यतपत् अस्या अभितप्तायास्त्रयीविद्याया एतान्यक्षराणि भूर्भुवःस्वरिति व्याहृत्याख्यानि संप्रास्रवन्त प्रास्फुरन् ॥ २ ॥

**तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः संप्रास्रव-त्तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येव-मोंकारेण सर्वा वाक् सन्तृण्णोंकार एवेदꣳ सर्व-**

**मोंकार एवेद्ँ सर्वम् ॥ ३ ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥**

तानि अक्षराणि । अभ्यतप्तेभ्योऽक्षरेभ्य ओंकारः संप्रास्रवत् । तत्स्वरूपं सदृष्टांतमाह—तद्यथेति । तत्रोंकारस्वरूपे दृष्टांतो यथा—शंकुना पर्णनालेन सर्वाणि पर्णानि पत्रावयवजातानि संतृण्णानि विद्धानि एवमोंकारेण परमात्मप्रतीकभूतेन सर्वा वाक् शब्दजातं संतृण्णा अत ओंकार एव इदं सर्वम् । अभ्यास आदरार्थः ॥ ३ ॥ इति चतुर्थे त्रयोविंशः खण्डः ॥ २३ ॥

अथ पुनः प्रकृतसामादिविज्ञानविधानार्थं तदज्ञाने दोषमाह—

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनँ रुद्राणां मध्यन्दिनँ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥**

ब्रह्मवादिनो वेदार्थज्ञाः वदंति किं यत्प्रातःसवनं प्रसिद्धं तद्वसूनां तैश्च सवनेशानैरष्टवसुभिरयं लोको वशीकृतः । तथा रुद्रैर्माध्यंदिनसवनेशानैरंतरिक्षलोको वशीकृतः । आदित्यैश्च विश्वैश्च देवैस्तृतीयसवनेशानैर्द्युलोको वशीकृतः ॥ १ ॥

एवं सति परिशिष्टलोकाभावात्—

**क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात्कथं कुर्यादथ विद्वान्कुर्यात् ॥ २ ॥**

तर्हि देहपातादूर्ध्वं यजमानस्य क्व लोकः कुत्र स्थानं । स यो यो यजमानः तं स्वस्य लोकस्वीकरणोपायं सामहोममंत्रोत्थानलक्षणं न विद्यान्न जानीयात् सोऽज्ञः कथं कर्म कुर्यादित्याक्षेपे प्राप्ते उत्तरमाह—अथशब्दो हेत्वर्थः । यस्मात्सामाद्यज्ञाने यज्ञाद्यकरणं प्राप्तं तस्माद्वक्ष्यमाणसामाद्युपायं विद्वान्कुर्यात् ॥ २

तदेवाह—

**पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवँ सामाभिगायति ॥३॥**

प्रातरनुवाकस्य शस्त्रस्योपाकरणात्प्रारंभात्पुरा पूर्वं गार्हपत्यस्य जघने पश्चाद्भागे उदङ्मुख उपविश्य यजमानो वासवं वसुदैवत्यं सामाभिगायति ॥ ३ ॥

स तदेव दर्शयति—

**लो३ कद्वारमापावा ३ र्णू ३३ पश्येम त्वा वयꣳ रा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ ४ ॥**

लोकस्य पृथिवीलोकस्य प्राप्तये यद्द्वारं तदपावृणु अपगतावरणं कुरु । हेऽग्ने त्वां वयं पश्येम राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगाय । अत्र हुमादयो गानार्थाः । इतिशब्दः सामसमाप्तिद्योतकः ॥ ४ ॥

**अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥ अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति ॥ ६ ॥**

अथैतद्गानानंतरं जुहोति होमं कुर्यात् । तन्मंत्रमाह—नम इति । नमः प्रह्वीभूत अग्नये तुभ्यं पृथिव्यां वसतीति पृथिवीक्षित् तस्मै पृथिवीक्षिते तथा लोकक्षिते पृथिवीलोकनिवासायेति यावत् । मे मह्यं यजमानाय त्वं लोकं पृथिवीलोकं विंद लभस्व । यत एष वै पृथिव्याख्यो यजमानस्य लोकोऽतो यजमानोऽहमायुषः परस्तादूर्ध्वं मरणानंतरमत्रास्मिन् पृथिवीलोके एता गंतास्मीति मंत्रेण जुहोत्याहुतिप्रक्षेपं करोति । अथोत्थानस्य मन्त्रमाह—अपजहीति । परिघं लोकद्वारार्गलं अपजहि अपनयेति मंत्रमुक्त्वोत्तिष्ठति । उक्तसामादिभिः सिद्धं फलमाह—तस्मै इति । तस्मै एवंकृतवते यजमानाय वसवः प्रातःसवनं प्रातःसवनसंबंधिपृथिवीलोकं संप्रयच्छंति ॥ ५ ॥ ६ ॥

एवमंतरिक्षजयोपायं दर्शयति—

**पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥ ७ ॥ लो३कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयं वैरा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ ८ ॥ अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे**

**यजमानाय विन्दैष वै यजमानस्य लोक एता-
स्मि ॥ ९ ॥ अत्र यजमानः परस्तादायुषः स्वा-
हाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा
माध्यन्दिनꣳ सवनꣳ संप्रयच्छन्ति ॥ १० ॥**

आग्नीध्रीयस्य दक्षिणाग्नेः पश्चाद्भागे । समानमन्यत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

तथैव द्युलोकजयोपायं दर्शयति—

**पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीय-
स्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ
सामाभिगायति ॥ ११ ॥ लो ३ कद्वारमपावा ३
र्णू ३३ पश्येम त्वा वयꣳस्वारा ३३३३३ हुं ३ आ
३३ ज्या ३ यो ३ आ ३२१११ इति ॥ १२ ॥
आदित्यमथ वैश्वदेवं लो३कद्वारमपावा ३ र्णू ३३
पश्येम त्वा वयꣳ साम्रा ३३३३३ हुं ३ आ ३३
ज्या ३ यो ३ आ ३२१११ इति ॥ १३ ॥ अथ
जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो
दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय
विन्दत ॥ १४ ॥ एष वै यजमानस्य लोक एता-
स्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहतपरि-
घमित्युक्त्वोत्तिष्ठति ॥ १५ ॥ तस्मा आदित्याश्च
विश्वे च देवास्तृतीयं सवनꣳ संप्रयच्छन्ति ॥**

आदित्यमादित्यदैवत्यं वैश्वदेवं विश्वदेवदैवत्यं च सामाभिगायति क्रमेण स्वाराज्याय द्युलोके स्वातन्त्र्याय साम्राज्याय स्वातन्त्र्यायैवेत्यर्थः । विन्दतेति बहुवचनमात्रं विशेषः । समानमन्यत् ॥ ११—१५ ॥—

एवमुक्तसामादिविज्ञानफलमाह—

**एष ह यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद
॥ १६ ॥ इति चतुर्थस्य चतुर्विंशः खण्डः ॥ २४ ॥**

इति छान्दोग्यब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥ उपनिषदि द्वितीयः ॥ २ ॥

एष ह वै यजमानो यज्ञस्य मात्रां याथात्म्यं वेद य एवमुक्तरीत्या यथोक्तं सामादि वेद । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥ इति चतुर्थे चतुर्विंशः खण्डः ॥ २४ ॥

सामोपास्तिमनेकधा विदधतां गत्वा वने तप्यता-
माचार्ये मरणावधिस्थितिमतामप्यन्तवत्स्यात्फलम् ।
इत्येवं सहसाकलय्य यतितामाश्रित्य यः संव्रजे-
दोंकारात्मनि संस्थितं तमनिशं वंदे नृसिंहं परं ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ॥ ३ ॥

एवं कर्माश्रितान्युपासनानि समाप्य तत्फलभूतादित्यादिविषयं स्वतन्त्रोपासनमाह—

**ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

असौ वै प्रसिद्धः आदित्यो देवानां वस्वादीनां मोदनहेतुत्वान्मध्विव मधु । देवमधुदृष्ट्योपास्य इति यावत् । कुतः । तस्य देवमधुनो भ्रमरमधुन इव द्यौर्द्युलोक एव तिरश्चीनवंशस्तिर्यग्गतवंश इति चिन्तयेत् । अन्तरिक्षमपूपः सवितृमध्वपूपः । मरीचयो मरीचिस्थाः सवित्राकृष्टा भौमा आपः पुत्रा इव पुत्राः मध्वपूपछिद्रस्था भ्रमरबीजस्थानीयाः ॥ १ ॥

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

तस्य मध्वाश्रयस्य सवितुर्ये प्रांचः प्राच्यां दिशि गताः रश्मयस्ता एवास्यादित्यमधुनः प्रागंचनात्प्राच्यो मधुनाड्यः प्रसिद्धमधुन इव मध्वाधारच्छिद्राणि । ऋच ऋङ्मन्त्रा एव मधुकृतो भ्रमराः । ऋग्वेद ऋग्ब्राह्मणभागस्तद्विहितं कर्मैव पुष्पस्थानीयम् । ताः प्रसिद्धाः अमृतसाधनीभूताः आपः पयः-

सोमाद्याहुतिसाधनापूर्वीभूताः । अत्र पुष्पाश्रयस्थानीयाः ता वै एता पूर्वोक्ता भ्रमरस्थानीया ऋचः ॥ २ ॥

**एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥**

एतं ऋग्वेदविहितं पुष्पस्थानीयमभ्यतपन् अभितस्तापमालोचनं रसनिःस्रावार्थं व्यापारं कृतवत्यः । तत्कर्म निवर्तितवत्य इति यावत् । तस्य ऋग्वेदविहितस्य कर्मणोऽभितप्तस्य ऋङ्मधुकरैर्निर्वर्तितस्य यशो विश्रुतत्वं तेजो देहगता दीप्तिः । इन्द्रियं प्रसिद्धं । वीर्यं देहसामर्थ्यम् । अन्नाद्यमन्नं च तदाद्यं चान्नाद्यम् । रसो मध्वाख्योऽजायतोत्पन्नः ॥ ३ ॥

**तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥ ४ ॥ इति पञ्चमे प्रथमः खण्डः ॥ १ ॥**

तदुत्पन्नं यशआदि मधु व्यक्षरद्विशेषेणाक्षरदपगमत् । गत्वा च तन्मध्वादित्यमभितः पार्श्वतः आदित्यस्य पूर्वभागमश्रयदाश्रितवत् । तद्वै एतदेवैतन्मधु प्रत्यक्षं यदेतदुद्यत आदित्यस्य रोहितं रक्तं रूपं दृश्यत इत्यर्थः ॥ ४ ॥ इति पञ्चमे प्रथमः खण्डः ॥ १ ॥

उक्तवंशादित्रयस्य सर्वेष्वपि मधुपर्यायेषु तत्रतत्रैव ध्येयत्वमभिप्रेत्य शुक्लादिमधूनां नाडीभ्रमरपुष्पभेदानाह 'अथ येऽस्य दक्षिणा रश्मय इत्यारभ्य क्षोभत इव' इत्यन्तेन—

**अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥ इति पञ्चमे द्वितीयः खण्डः ॥ २ ॥**

यजूंष्येव यजुर्मन्त्रा एव भ्रमरा इत्यादि पूर्ववत् ॥ १ ॥ २ ॥ ॥ ३ ॥
इति पञ्चमे द्वितीयः खण्डः ॥ २ ॥

**अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥ इति पंचमस्य तृतीयः खण्डः ॥ ३ ॥**

सामान्येव गीतिभावमापन्ना मन्त्रा एवेत्याद्यपि समानम् ॥ १ ॥ २ ॥ ३ ॥
इति पञ्चमे तृतीयः खण्डः ॥ ३ ॥

**अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥ इति पञ्चमस्य चतुर्थः खण्डः ॥ ४ ॥**

अथर्वणाङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । इतिहासपुराणं आथर्वणब्राह्मणभागः प्रसिद्धं वा तयोरपि पारिप्लवमाचक्षीतेत्यश्वमेधे विनियोगदर्शनात् । तथा च तदाख्यातमेव पुष्पं इतिहासं पुराणं मन्त्राश्च भ्रमरा इति बोद्धव्यम् । तथाच पुष्पभ्रमरचिन्तनविकल्पोऽगतिकः । आदित्यस्य परं अतिशयेन कृष्णं रूपमित्यपि शास्त्रप्रत्यक्षम् ॥ १ ॥ २ ॥ ३ ॥ इति पञ्चमे चतुर्थः खण्डः ॥ ४ ॥

**अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता**

**अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥**

गुह्या रहस्या एवादेशाः लोकद्वारमित्याद्युक्तोपदेशा भ्रमराः । ब्रह्मात्र प्रणव एव । आदित्यस्य मध्ये क्षोभत इव चलतीव समाहितचित्तस्य दृश्यते ॥ १ ॥ २ ॥ ३ ॥

अथ ध्येयान् रूपभेदान् स्तौति—

**ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥ इति पञ्चमस्य पञ्चमः खण्डः ॥ ५ ॥**

ते वै एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः सारभूताः । कथं । वेदा हि रसाः पूर्वमुक्तास्तेषां कर्मभावमापन्नानां वेदानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूताः । किं च तानि वै एतानि रोहितादिरूपाण्यमृतानामप्यमृतानि । कथं । वेदाह्यमृताः पौरुषेयबुद्धिपूर्वाविरचितत्वेन नित्यत्वात् । तेषां वेदानां कर्मभावमापन्नानामेतानि रोहितादिरूपाण्यमृतानि ॥ ४ ॥ इति पञ्चमे पञ्चमः खण्डः ॥ ५ ॥

अमृतानि ध्येयान्युक्त्वामृतोपजीविदेवतागणाननुचिंतनीयानुपदिशति तद्यत्प्रथममित्यादिपंचभिः खण्डैः—

**तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

तत्तत्रोक्तेषु पंचस्वमृतेषु मध्ये यत्प्रथमममृतं रोहितं रूपं तदमृतं वसवः प्रातःसवनेशाना अग्निना मुखेन प्रधानेनाग्निमुख्याः संतः उपजीवंत्युपभुंजते । लोकवद्ग्रासं कृत्वा प्राप्तं भक्षणं निषेधति—न वै देवा अश्नंति न पिबंतीति । कथं तर्ह्युपजीवनमित्यत आह—एतदेवेति । एतदेवोक्तममृतं देवा दृष्ट्वोपलभ्य

सर्वैरेव करणैरनुभूय तृप्यन्ति नतु केवलं चक्षुषैव । उक्तयशआद्यात्मकस्यामृतस्य श्रोत्रादिग्राह्यत्वात् ॥ १ ॥

तर्हि किं ते निरुद्यमा एव नेत्याह—

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

एतदेव रोहितरूपमभिलक्ष्य स्वभोगानवसरं बुद्ध्वाऽभिसंविशन्त्युदासते । ते भोगावसरे त्वेतस्माद्रूपादेतदमृतभोगनिमित्तमुद्यन्ति उद्यमं कुर्वन्त्युत्साहवन्तो भवन्ति लोकवत् ॥ २ ॥

उक्तध्येयस्य फलं ध्यानविधिमाह—

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

यः कश्चिदेतदमृतं मधु एवं 'ऋच एव मधुकृतः' इत्यादिना यथोक्तं वेदोपासीत स वसूनां मध्ये एकः अन्यतमो भूत्वा वसुभिः सहैक्यं प्राप्याग्निमुखेनेत्यादि पूर्ववत् ॥ ३ ॥

कियन्तं कालमुपजीवतीत्यत आह—

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥ इति षष्ठः खण्डः ॥ ६ ॥**

सः प्रथमामृतं वसूनां विद्वान् यावत्कालपर्यंतमादित्योऽस्मद्दृष्ट्या पुरस्तात्प्राच्यां दिशि प्राचीदिग्गतैरैन्द्रीस्थैर्जनैः यावत्कौबेर्यां मध्याह्नगः सवितोदेतोद्यन् दृश्यते । पश्चादस्मद्दृष्ट्या पश्चिमायां दिशि अस्तमेता गन्ता पूर्वदिग्गतैरैन्द्रीस्थैरेव जनैर्दृश्यते तावद्वसूनां संबन्ध्याधिपत्यमैश्वर्यं स्वाराज्यं स्वाराजभावं स्वातन्त्र्यं पर्येता गन्ता भवतीत्यर्थः ॥ ४ ॥ इति पञ्चमे षष्ठः खण्डः॥६

**अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवम-**

मृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति सप्तमः खण्डः ॥ ७ ॥

द्विस्तावदैन्द्रीवासिभिर्दृश्यमानोदयास्तमयकालाद्द्विगुणितेन कालेनास्मद्दृष्ट्या दक्षिणतो दक्षिणादिक्स्थैः संयमिनीवासिभिरैन्द्र्यां मध्याह्नग उदेतोद्यन् दृश्यते ऐन्द्र्यपेक्षया संयमिन्याः द्विगुणकालावस्थायित्वात्। समानमन्यत् ॥ १—४ ॥ इति पञ्चमे सप्तमः खण्डः ॥ ७ ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

द्विस्तावत्ततो द्विगुणेन कालेन पश्चादस्मद्दृष्ट्या पश्चिमदिक्स्थैर्वारुणीवासिभिः संयमिन्यां मध्याह्नगः उदेतोद्यन् दृश्यतेऽस्याः संयमिन्यपेक्षया द्विगुणकालावस्थायित्वात्। समानमन्यत् ॥ १—४ ॥ इति पञ्चमेऽष्टमः खण्डः ॥ ८ ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥२॥ स य एतदेवममृतं

**वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति नवमः खण्डः ॥ ९ ॥**

द्विस्तावदुत्तरतोऽस्मद्दृष्ट्यपेक्षयोत्तरदिक्स्थैः कौबेरीवासिभिः वारुण्यां मध्याह्न उदेतोद्यन् दृश्यते । अस्या अपि वारुण्यपेक्षया द्विगुणकालावस्थायित्वात् ॥ १—४ ॥ इति पञ्चमे नवमः खण्डः ॥ ९ ॥

**अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेतार्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति दशमः खण्डः ॥ १० ॥**

ब्रह्मणा प्रजापतिना द्विस्तावदूर्ध्वं उदेता अर्वाङधस्तादस्तमेता इलावृतवासिभिर्जनैर्दृश्यते । तेषां मानसोत्तरसुमेरुभ्यां प्राकारभूताभ्यां परित आवृतादित्यप्रकाशत्वात् । तथाच पूर्वपूर्ववस्वादीनां भोगकालादुत्तरोत्तराणां रुद्रादीनां द्विगुणो भोगकालस्तत्तदमृतध्यायिनामपि तावान्भोगकाल इति समुदायार्थः ॥ १—४ ॥ इति पञ्चमे दशमः खण्डः ॥ १० ॥

अथोक्तमधुविद्यायाः क्रमेण मुक्तिपर्यवसायितां दर्शयितुमाह—

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

अथोदयास्तमनेन प्राणिनां स्वकर्मभोगनिमित्तमनुग्रहं कृत्वा ततस्तदनन्तरं सवितृरूपापन्नो विद्वान् ऊर्ध्वो ब्रह्मीभूतः सन्नात्मन्युदेत्य स्वमहिम्नि प्रकाशं लब्ध्वा नैवोदेता नास्तमेता किंत्वेकलोऽद्वितीय एव मध्ये स्वात्मन्येव स्थाता। स्थातेतिप्रयोगादुक्तक्रममुक्तौ विद्वदनुभवप्रकाशकं मन्त्रं प्रमाणयति—तदिति। तत्तत्रोक्तेऽर्थे एष श्लोको मन्त्रो भवति ॥ १ ॥

कश्चिदादित्याल्लब्धब्रह्मोपदेशो युक्तावस्थायां ब्रह्मणि स्थितो वियुक्तावस्थायां केनचित्पृष्टः प्रोवाच—

**न वै तत्र न निम्लोच. नोदियाय कदाचन।**
**देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥**

न वै नैव तत्र ब्रह्मलोके त्वत्पृष्टमस्ति। किं। न निम्लोच इति वर्णलोपश्छान्दसः। न निमुम्लोच नास्तमगमत्सविता न चोदियाय नोद्गतः कदाचन कस्मिंश्चिदपि काले। एतच्छपथेन द्रढयति—देवा इति। भो देवाः यूयं शृणुध्वं। यथा मयोक्तं सत्यवचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि माविरुध्येयमप्राप्तिर्ब्रह्मणो माभूत्। इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥२॥

उक्तोपासनं सफलमुपसंहरति—

**न ह वा अस्मा उदेति न निम्लोचति सकृ-**
**द्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥३॥**

न ह वै अस्मै आदित्यात्मभूताय विदुषे किंचिदुदेति न निम्लोचति नास्तं गच्छति। किन्तु सकृत्सदा दिवा हैव दिवस एव स्वयं ज्योतिष्ट्वरूपो भवति। कस्मै य एतां यथोक्तामेवं वंशाद्युपेतां ब्रह्मणो वेदस्योपनिषदं गुह्यमुपासनं वेद तस्मै इत्यर्थः ॥ ३ ॥

उक्तां विद्यां गुरुशिष्यादिकथनेन स्तौति—

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे**
**मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय**
**पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥**

तदेतन्मधुविज्ञानं ह ब्रह्मा हिरण्यगर्भः प्रजापतये विराजे उवाच। प्रजापतिर्मनवे मनुः प्रजाभ्य इक्ष्वाकादिभ्य उवाच। किञ्च तद्धैतत्तदेतन्मधुब्रह्म-

विज्ञानं ह उद्दालकनाम्ने आरुणये ज्येष्ठाय पुत्राय पिता अरुणः प्रोवाचोक्तवान् ॥ ४ ॥

अत इदानींतनोपि—

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्यायान्तेवासिने ॥ ५ ॥**

इदं वाव इदमेव तद्ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय पिता प्रब्रूयात् । प्राणाय्याय योग्यायांतेवासिने शिष्याय प्रब्रूयात् ॥ ५ ॥

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥ इत्येकादशः खण्डः ११**

एताभ्यां नान्यस्मै कस्मै च न प्रब्रूयादिति संबंधः । कुतः । यद्यपि कश्चिदपि आचार्याय इमां पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि धनस्य धनेन भोगोपकरणैः पूर्णां संपन्नामपि दद्यात्तथाप्येतदेव मधुविद्यादानमेव ततो यथोक्तपृथिवीदानात् भूयोऽधिकतरफलमिति । अभ्यास आदरार्थः ॥ ६ ॥ इति पंचमे एकादशः खण्डः ॥ ११ ॥

सवितृद्वारकब्रह्मविद्यामुक्त्वा सवितृदैवत्यगायत्रीद्वारा तामुपदिशति—

**गायत्री वा इद९ँ सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इद९ँ सर्वं भूतं गायति च त्रायते च ॥ १ ॥**

गायत्री वै इदं सर्वं भूतं प्राणिजातं यदिदं किंच यत्किंचित्स्थावरं जंगमं वा तदपि गायत्र्येव । कुतः । वाग्वै शब्दसामान्यं वै गायत्र्यतः सा सर्वात्मिका वाचकशब्दसामान्यस्य सर्ववाच्यसंबंधात्कथं वाचोपि गायत्रीत्वमित्यत आह— वाग्वा इति । यतो वाग्वै इदं सर्वं भूतं प्राणिजातं गायत्यसौ गौरित्येवं शब्दयति त्रायति च माभैषीरित्यादिरूपेण रक्षति चेत्येतस्मात् गायत्री ॥ १ ॥

अथास्याः पृथिवीशरीरहृदयप्राणात्मकत्वमाह—

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या९ँ ह्रीद९ँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥**

या वै सा सर्वभूतरूपा गायत्री सा इयं वाव एव । का । सेयं पृथिवी । कुतः । अस्यां पृथिव्यां हि यस्मादिदं सर्वं भूतं स्थावरजंगमं प्रतिष्ठितम् । एतदेव साधयति—एतामिति । एतामेव पृथिवीं नातिशीयते नातिवर्तते सर्वं भूतं ॥ २ ॥

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

या वै सा पृथिवी इयमेव सा इदमेव तत् । किं । यदिदमस्मिन्पुरुषे जीवति [शरीरं] । कुतः । अस्मिञ्छरीरे हि यस्मादिमे प्रसिद्धाः प्राणाः प्रतिष्ठिताः । यत एतदेव शरीरं प्राणाः नातिशीयंते नातिवर्त्तंते ॥ ३ ॥

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥**

यद्वै तत्पुरुषे शरीरं गायत्र्यात्मकं इदं वाव तत् । किं । यदिदमस्मिन्पुरुषे जीवच्छरीरेऽन्तर्मध्ये हृदयपुंडरीकाख्यं । कुतः । अस्मिन् हृदये हि यस्मादिमे प्राणाः प्रतिष्ठिताः । यत एतदेव हृदयं प्राणा नातिशीयंते ॥ ४ ॥

अस्याः ध्यानार्थमाह—

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५ ॥**

सा एषा गायत्री छंदोरूपा सती चतुष्पदा षडक्षरपादा षड्विधा वाग्भूतपृथिवीशरीरहृदयप्राणभेदैः षट्प्रकारा । सर्वभूतसंबंधसिद्ध्यर्थमुपदिष्टयोर्वाक्प्राणयोरपि गायत्रीभेदत्वं षड्विधा गायत्रीति वचनात् । वागादिभेदैः षड्विधां गायत्रीं पाठक्रमेणानुचिंत्याजहल्लक्षणया गायत्र्यवच्छिन्नं लक्षितं ब्रह्म चिंतयेदिति प्रकरणार्थः । मंत्रं संवादयति—तदेतदिति । तत्तत्रोक्ते प्रकरणार्थे स्थिते सति एतत् गायत्रीमुखेनोक्तं ब्रह्म ऋचा मंत्रेणाभ्यनूक्तं प्रकाशितम् ॥ ५ ॥

**तावानस्य महिमा ततो ज्यायाँश्च पूरुषः ।**
**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥**

यावांश्चतुष्पात् षड्विधश्च विकार उक्तस्तावानस्य गायत्रीब्रह्मणो महिमा विभूतिर्विस्तार ऐश्वर्यमात्रमेव केवलं ततस्तस्माद्विकारलक्षणाज्ज्यायान्महत्तरो

निर्विकारः पूरुषः। पूरुषः सर्वपूरणात्पुरिशयनाच्च । एतदेवोक्तं स्पष्टयति—पाद इति। अस्य गायत्रीब्रह्मणः एकः पादः सर्वाणि गायत्र्यात्मनोक्तानि भूतानि अस्य गायत्रीब्रह्मणस्त्रिपादमृतं पुरुषाख्यं दिवि द्योतनवति स्वात्मन्यवस्थितमिति ॥६॥

उक्तमुपास्यं गायत्र्यवच्छिन्नं ब्रह्म हृदयाकाशे उपास्यमिति दर्शयितुं बाह्याकाशाद्यभेदेन हृदयाकाशमाह—

**यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

त्रिपादमृतमित्येवं यद्गायत्रीमुखेनोक्तं तद्ब्रह्मेदं वाव जाठरादिस्थानप्रतीकत्वेनोच्यमानमेव। कथं योयं प्रसिद्धः पुरुषाच्छरीराद्बहिर्द्धा बहिराकाशो भौतिकः ७

**अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥**

यो वै स बहिर्द्धा पुरुषादाकाशोऽयमेव सः । कः । योयमन्तःपुरुषे शरीरमध्ये आकाश आध्यात्मिकः ॥ ८ ॥

**अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णमप्रवर्तिनीं श्रियं लभते य एवं वेद ॥ ९ ॥ इति द्वादशः खण्डः ॥ १२ ॥**

योऽयमन्तःपुरुषे आकाशोऽयमेव सः । कः । योऽयमन्तः हृदये पुण्डरीके आकाशः । नन्वत्र ध्येयस्य ब्रह्मणः परिच्छिन्नोत्पत्तिमत्त्वादि स्यादित्यत आह—तदेतदिति । यदेतत् हार्दाकाशं ब्रह्म पूर्णं सर्वगतमेवातएवाप्रवर्त्ति न कुतश्चित् क्वचित्प्रवर्तितुं शीलमस्येत्यप्रवर्ति । उभयगुणकोपासनफलमाह—पूर्णामिति । पूर्णामप्रवर्तिनीं चानुच्छित्तिधर्मकां श्रियं विभूतिं लभते । य एवं यथोक्तं पूर्णमप्रवर्तिगुणं ब्रह्म वेद । मुख्यफलं तु ब्रह्मभावापत्तिरिति द्रष्टव्यम् ॥ ९ ॥ इति पञ्चमे द्वादशः खण्डः ॥ १२ ॥

अस्य ब्रह्मण उपास्त्यंगभूतं द्वारपालोपासनमाह—

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

तस्य ह वै प्रकृतस्यैतस्यानन्तरनिर्दिष्टस्य हृदयस्य पञ्च पञ्चसंख्याकाः देवसुषयः देवैः प्राणादित्यादिभी रक्ष्यमाणाः सुषयः छिद्राणि हार्दब्रह्मप्राप्तिद्वाराणि। तत्रास्य परमात्मभवनस्य हृदयस्य स यः प्राङ् सुषिः पूर्वाभिमुखः सुषिः सः प्राणस्तद्द्वारा प्राणितीति प्राणस्तच्चक्षुः स आदित्यस्तदेतत्त्रयं तेजोऽन्नं च तदाद्यं चान्नाद्यमित्युपासीत। एतद्गुणोपासनफलमाह—तेजस्वीति। तेजस्वी त्वतिकान्तिमान्। अन्नादश्चामयादिदुःखरहितो भवति य एवं यथोक्तगुणकं वेद ॥ १ ॥

**अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥**

अथ योस्य दक्षिणः सुषिरित्यारभ्य ते वा एते इत्यतः प्राक्तनो ग्रन्थः समानार्थः। यशः ख्यातिः ॥ २ ॥

**अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥**

ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ ३ ॥

**अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेद ॥ ४ ॥**

कीर्तिः परोक्षा ख्यातिः। व्युष्टिरपरोक्षा ख्यातिः ॥ ४ ॥

**अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ॥ ५ ॥**

ओजो बलम्। महः महत् ॥ ५ ॥

तस्य वा एतस्येत्याद्युक्तमुपसंहरति—

**ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पंच ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रति-**

**पद्यते स्वर्गं लोकं य एतानेवं पंच ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥**

ते वैते यथोक्ताः पञ्चसुषिसंबद्धाः पञ्च ब्रह्मणो हार्दस्य पुरुषाः स्वर्गस्य मोक्षात्मकस्य हार्दब्रह्मणो लोकस्य स्वप्रकाशस्य द्वारपाः द्वारपालाः। उपसंहृतमेतदुपासनं। गौणं मुख्यं फलं च विद्धाति—स य एतानिति। अस्योपासकस्य कुले वीरः पुत्रो जायते वीरपुरुषोपासनात्। तस्य चर्णापाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वं ततश्च स्वर्गलोकप्रतिपत्तये पारंपर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलं मुख्यमित्यर्थः। य एतानित्युक्तानुवादः। शेषं समानम् ॥ ६ ॥

गायत्र्युपाधिकं ह्युपास्यत्वेनोक्तं तस्यैव कौक्षेयज्योतिःप्रतीकत्वेनोपासनं विद्धातुमाह——

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥**

अथशब्दो विद्यान्तरोपक्रमार्थः। अतोऽमुष्माद्दिवो द्युलोकात् यत्परं ज्योतिः परं ब्रह्मैव दीप्यते प्रकाशते। क्व विश्वतः पृष्ठेषु। एतस्यैव व्याख्या सर्वतः संसारात्पृष्ठेषूपरितनेषु अनुत्तमेषु न विद्यते उत्तमं येभ्य इति बहुव्रीहिरेव न तत्पुरुषशंकेति तदेव व्याचष्टे। उत्तमेषु हैरण्यगर्भादिषु कार्यभूतेषु लोकेषु। अस्य कौक्षेयज्योतिषि संपत्तिमाह—इदं वावेति। यदुक्तं ब्रह्मेदं वावेदमेव तत्। किं यदिदं वक्ष्यमाणप्रमाणकमस्मिन्नन्तःपुरुषे शरीरमध्ये ज्योतिर्भौतिकम्। अस्य दृष्टत्वश्रुतत्वगुणाभ्यां ध्यानविधानार्थं दृष्टिश्रुतिलिङ्गगम्यत्वमाह—तस्येति। तस्य कौक्षेयब्रह्मण एषा दृष्टिर्दर्शनम् ॥ ७ ॥

**यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भ-**

**वति य एवं वेद य एवं वेद ॥ ८ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

यत्र यस्मिन् काले अस्मिन् शरीरे हस्तसंस्पर्शेनोष्णिमानमुष्णस्पर्शमेतद्विज्ञानं यथा स्यात्तथा विजानाति तस्य ब्रह्मण एषा श्रुतिः श्रवणोपायः । कः । यत्र यस्मिन्काले कर्णावपिगृह्यांगुलिभ्यां पिधाय निनदमिव रथघोषमिव । नदथुरिव ऋषभकूजितमिव ज्वलतः अग्नेरिवोप समीपे स्वांतर्गतमेव शब्दमेतच्छ्रवणं यथा स्यात्तथा शृणोति । एतद्गुणकं ध्यानं विदधाति—तदेतदिति । तदेतद्दिवः परस्ताद्दीप्यमानकौक्षेयज्योतिष्यध्यस्तं ब्रह्म दृष्टं च श्रुतं चेत्युपासीत दृष्टत्वश्रुतत्वगुणाभ्यामुपासितव्यम् । उपासनफलमाह—चक्षुष्य इति । चक्षुष्यश्चक्षुषा दर्शनीयः श्रुतो विख्यातश्च भवति य एवमुभयगुणकं ब्रह्म वेद । अभ्यासस्तु फलवद्विद्यादरार्थः ॥ ८ ॥ इति पञ्चमे त्रयोदशः खण्डः ॥ १३ ॥

प्रतीकद्वारेण ब्रह्मोपासनमुक्त्वेदानीं प्रतीकं हित्वा सगुणब्रह्मोपासनमाह—

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

तज्जलान् तस्माद्ब्रह्मणो जगज्जायत इति तज्जं तस्मिंल्लीयत इति तल्लं तस्मिन्ननिति चेष्टते स्थितिकाल इति तदनं तज्जं च तल्लं च तदनं चैतेषां समाहारस्तज्जलानं । अवयवलोपश्छांदसः । तज्जलान् तज्जत्वात्तल्लत्वात्तदनत्वाच्चेत्येतस्माद्धेतोस्त्रिषु कालेषु ब्रह्मव्यतिरेकेण जगतोऽनिरूपणात्तदात्मत्वेनावशिष्टं सर्वं खल्विदं जगद्ब्रह्मैवेत्येवं निश्चयपूर्वकं शांतो रागद्वेषादिरहितः सन्नुपासीत । शांतो भवेदिति शमगुणविधिपरमिदं वाक्यमित्यर्थः । शमं विधाय तद्वतः प्रयोजनोक्तिरूपहेतूक्तिपूर्वकं कर्तव्यमिति(?) युनक्ति—अथेति । अथशब्दो हेत्वर्थः । यस्मात्खलु क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो यथास्मिंल्लोके वर्तमानदेहे भवति तथा तादृगेव क्रतुफलात्मक इतोऽस्माद्देहात्प्रेत्य मृत्वा भवति । तस्मात्सः शांतः क्रतुमविचलप्रत्ययं कुर्वीत ॥ १ ॥

**मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आ-**

**काशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्व-
रसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

मनुतेऽनेनेति मनोंतःकरणं तन्मयस्तत्प्रायो मनोमयः । अतएव प्राणशरीरः प्राणो लिंगात्मा ज्ञानक्रियाशक्तिमान् स शरीरं यस्येति प्राणशरीरः । एतदुभयविशेषणं ब्रह्मणि जीवाभेदविवक्षया । भा दीप्तिः चैतन्यलक्षणं रूपं यस्य स भारूपः । सत्याः अवितथाः संकल्पा यस्येति सत्यसंकल्पः । आकाशः आत्मा स्वरूपं यस्येत्याकाशात्मा । सर्वं जगल्लक्षणं कर्मास्येति सर्वकर्मा । सर्वे कामाः दोषरहिता यस्येति सर्वकामः । सर्वे पुण्या गन्धा अस्येति सर्वगन्धः । सर्वे सुखकरा रसा अस्येति सर्वरसोऽतः सर्वमिदं जगदभ्यात्तो व्याप्त इति कर्तरि निष्ठा। तेनेदं सर्वं व्याप्तमिति यावत्। एवं गन्धादिग्रहणोक्तेरस्य घ्राणादिप्रसंगं निराकरोति–अवाकीति । वाक् शब्दः उच्यते यया सा वाग्वागेव वाकः । स विद्यते यस्य स वाकी न वाकी अवाकी । अयं वाक्प्रतिषेध इतरेन्द्रियादेरुपलक्षणपरः । न विद्यते आदरो यस्येत्यनादरः । अनादर इत्यस्यैव विवरणमसंभ्रम इति । असंभ्रमः अप्राप्तप्राप्तौ हि संभ्रमः स च नेश्वरे तस्य नित्यतृप्तत्वात् ॥ २ ॥

अस्मात्प्रत्यगात्मनोऽभिन्नत्वमाह—

**एष म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा
सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष
म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायान-
न्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥**

एष यथोक्तगुणः परमात्मा मे ममात्मांतर्हृदये हृदयपुण्डरीकमध्ये व्रीह्यादेरत्यन्तसूक्ष्मादणीयानणुतरः । अस्य परिमाणस्य वास्तवत्वशंकां वारयति–एष इति । एभ्य उक्तपृथिव्यादित्रिलोकेभ्यः ज्यायान्महत्परिमाणः ॥ ३ ॥

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमि-
दमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय
एतद्ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति यस्य
स्यादद्धा न विचिकित्सास्तीति ह स्माह शा-
ण्डिल्यः शाण्डिल्यः ॥४॥ इति चतुर्दशः खण्डः ॥१४॥**

उक्तगुणलक्षित एवेश्वरो ध्येयो न तु तद्गुणविशिष्ट इति शंकां वारयितुं सर्वकर्मेत्याद्येतद्ब्रह्मेत्यन्तं पुनर्वचनम् । उक्तोपासनमादेहपातादावर्तितं फलहेतुरित्यभिप्रेत्याह—एतमित इति । एतमुक्तोपास्यमितोऽस्माच्छरीरात्प्रेत्य मृत्वाभिसंभविता प्रतिपत्तैवास्मीत्येवं यस्य विदुषो अद्धा निश्चयः स्यान्न विचिकित्सा संशयोऽस्ति स उपास्यभावमाप्नोति नेतर इत्यर्थः । उक्तोपासनस्य सांप्रदायिकत्वमाह—इति ह स्माहेति । इत्येतत् शाण्डिल्यो नामतः ऋषिराह स्मोक्तवान् । अभ्यासः क्रतुफलसंबन्धादरार्थः ॥ ४ ॥ इति पञ्चमे चतुर्दशः खण्डः

अथास्य कुले वीरो जायत इत्युक्तम् । पुत्रस्य दीर्घायुष्ट्वसिद्धये कोशविज्ञानमाह—

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳ श्रितम् ॥ १॥**

अन्तरिक्षमुदरं सुषिरं यस्यासावन्तरिक्षोदरः । अन्तरिक्षे उदरदृष्टिः कर्तव्या । तथा भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नो न जीर्यति इत्येवंभूतः कोश इव कोशो हिरण्यादिनिक्षेपस्थानं । दिशो हि प्रसिद्धा अस्य कोशस्य स्रक्तयः कोणाः द्यौरेवास्य कोशस्योत्तरमूर्ध्वं बिलं मुखं । स एषः त्रैलोक्यात्मकः कोशो वसुधानः प्राणिनां कर्मफलाख्यं वसु धीयतेऽस्मिन्निति वसुधानः । कुतः । तस्मिन् कोशमध्ये इदं समस्तं प्राणिनां कर्मफलं श्रितं स्थितम् ॥ १ ॥

कोशकोणत्वेनोक्तासु दिक्ष्ववान्तरविभागमाह—

**तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥**

कोशस्य प्राचीदिक्प्राग्गतो विभागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिण इति जुहूरिति चिन्तयेत् । तथा दक्षिणादिक्सहमाना नाम सहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना । प्रतीची पश्चिमादिक् राज्ञी नाम राज्ञा वरुणेनाधिष्ठितत्वात् । उदीचीदिक् सुभूता नाम भूतिमद्भिः कुबेरादि-

भिरधिष्ठितत्वात् । तासां दिशां वायुरमृतभूतो वत्स इति चिन्तयेत् । तत्फलमाह—स य इति । यः कश्चित्पुत्रदीर्घायुष्ट्वकाम एवं यथोक्तममृतगुणं वायुं दिशां वत्सं वेद स उपासकः पुत्ररोदं पुत्रनिमित्तं रोदं रोदनं न रोदति करोति । उपदिष्टं सफलमुपसंहरति—सोऽहमिति । यतः सोऽहं पुत्रजीवितार्थी एवमेतं वायुं दिशां वत्सं वेदातोऽहं पुत्ररोदं रोदनं मा रुदम् ॥ २ ॥

यथोक्तोपासनांगं मन्त्रपञ्चकमाह—

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥**

अरिष्टमविनाशितं कोशं यथोक्तमहं प्रपद्ये प्रपन्नोस्मि । अमुनानेनामुकशर्मणा पुत्रनाम्ना निमित्तभूतेन तद्दीर्घायुष्ट्वं निमित्तीकृत्येति यावत् । अमुनामुनामुनेत्यभ्यासो जपार्थः । प्राणं प्रपद्य इत्यादिमन्त्रचतुष्टयं समानम् ॥ ३ ॥

अथैषां द्वितीयादिमन्त्राणां प्रतीकग्रहणपूर्वकमभिप्रेतार्थमाह—

**स यदवोचं प्राणं प्रपद्य इति प्राणो वा इद॑ँ सर्वं भूतं यदिदं किंच तमेव तत्प्रापत्सि ॥ ४ ॥ अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥ अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥ अथ यदवोच॑ँ स्वःप्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥ इति पञ्चदशः खण्डः ॥ १५ ॥**

सोऽहं मन्त्रात्मना यदवोचं प्राणं प्रपद्य इत्यत्र प्राणो वै प्राणएवेदं सर्वं भूतं प्राणिजातं यदिदं किञ्च । तमेव सर्वात्मकं प्राणं तत्वेन प्राणप्रतिपादनेन प्रापत्स्यहं प्रतिपन्नोऽभूवं एवमेव तृतीयमन्त्रादिब्राह्मणम् । द्विर्वचनं यथोक्तविज्ञानादरार्थम् ॥ ४—७ ॥ इति पञ्चमे पञ्चदशः खण्डः ॥ १५ ॥

पुत्रफलेन सह पितुः संबन्धश्च दीर्घायुष्ट्ववत एवेति स्वस्यापि तत्सिद्धये उपासनान्तरमाह—

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंꣳशतिवर्षाणि तत्प्रातःसवनं चतुर्विंꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥**

पुरुषो वै जीवनविशिष्टकार्यकरणं संघात एव यज्ञः पुरुषे स्वात्मनि यज्ञदृष्टिः कर्तव्या। तत्र तत्सादृश्यमाह—तस्येति। तस्य पुरुषस्य यान्यायुषः प्राथमिकचतुर्विंशतिवर्षाणि तत्प्रसिद्धं प्रातःसवनं। अत्रापि साधर्म्यमाह—चतुर्विंशत्यक्षरा गायत्री गायत्रं च प्रातःसवनमिति संख्यासामान्यात्। किञ्च तत्प्रातःसवनमस्य पुरुषस्य यज्ञस्य वसवो देवा अन्वायत्ता अनुगताः। प्राणा वाव वागादय एव वसव इति। कुतः। एते प्राणा हि यस्मादिदं सर्वं प्राणिजातं वासयंति ॥ १ ॥

उपासनांगं कर्तव्यमुपदिश्यते—

**तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःवसनं माध्यन्दिनꣳ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥ अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यदिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥ तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनꣳ सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥**

तमुपासकं चेद्यद्येतस्मिन्प्रातःसवने वयसि किञ्चिन्मरणशंकाकारणं व्याध्याद्युपतपेत् दुःखमुत्पादयेत्तदा स यज्ञसंपादी ब्रूयाज्जपेन्मन्त्रमिमं । कोऽसौ । प्राणा वसव इदं उक्तरूपं मे मम यज्ञरूपस्य प्रातःसवनं माध्यन्दिनं संतनुत माध्यं दिनसवनेनायुषा सहितमेकीभूतं संततं कुरुत । इतिशब्दः प्रार्थनामन्त्रभागसमाप्त्यर्थः । अहं यज्ञो यज्ञात्मकः युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये मा विलोप्सीय माविलुप्येयं माविच्छिद्येयम् । इतिशब्द आशीर्वादमन्त्रभागसमाप्त्यर्थः । अस्य सफलत्वमाह—उद्धैवेति । सोऽनेन मन्त्रजपेन ध्यानेन च ततस्तस्मादुपतापादुदेत्योद्गम्य विमुक्तः सन्नगदो ह नीरोगो भवत्येव । एवमथ यानीत्यादि बोद्धव्यम् ॥ २ ॥ ३ ॥ ४ ॥

**अथ यान्यष्टाचत्वारिँशद्वर्षाणि तृतीयसवनमष्टाचत्वारिँशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदँसर्वमाददते ॥ ५ ॥ तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥**

एते प्राणा हि यस्मादिदं सर्वं प्राणिजातं रोदयन्ति मरणादिकाले । एते हीदं सर्वं शब्दादिकमाददते गृह्णंति । समानमन्यत् ॥ ५ ॥ ६ ॥

संमतिमाह—

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्रह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥ इति षोडशः खण्डः ॥ १६ ॥**

ह वै इत्यैतिह्यार्थे । महिदासो नामतः इतरायाः अपत्यमैतरेयस्तद्यज्ञदर्शनं विद्वान् रोगेण स्पृश्यमान आह स्म । किं । हे रोग स त्वं मे इति

मम कर्मणि षष्ठी । मां किं कस्मादेतदुपतपनं यथा स्यात्तथोपतपसि । यतोऽयं यज्ञः सोऽहं अनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्याम्यतस्तव श्रमो वृथैवेति । एवं निश्चयः स महिदासः षोडशोत्तरं च वर्षशतमजीवत् । महिदासस्यैतत्फलत्वेप्यन्यस्य किमित्यत आह—प्र ह षोडशमिति । अन्योपि प्रजीवति ह षोडशोत्तरं वर्षशतं य एवं यथोक्तं यज्ञसंपादनं वेद जानातीत्यर्थः ॥ ७ ॥ इति पञ्चमे षोडशः खण्डः ॥ १६ ॥

अपरमपि यज्ञांगसादृश्यात्संपाद्यत इत्याह—

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥**

स यज्ञसंपादी पुरुषो यदशिशिषत्यशितुमिच्छति यत्पिपासति पातुमिच्छति यन्न रमते इष्टाद्यप्राप्तिनिमित्तमरमणं ता अस्य पुरुषस्य दीक्षाः । दुःखानुभवे दीक्षादृष्टिः कर्तव्या ॥ १ ॥

**अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥ २ ॥**

अथ यदश्नात्यशनं करोति यत्पिबति यद्रमते रतिमनुभवति तदुपसदैः पयोभक्षणवद्भिः समानतामेति ॥ २ ॥

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥**

अथ यद्धसति यज्जक्षति भक्षयति यच्च मैथुनं चरति तत् स्तुतशस्त्रैरेव समानतामेति शब्दवत्त्वसामान्यात् ॥ ३ ॥

**अथ यत्तपो दानमार्जवमहिँसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥**

अथ यत्तपोदानमार्जवं नम्रताऽहिंसा सत्यवचनं ता अस्य पुरुषस्य दक्षिणाः धर्मवृद्धिहेतुत्वात् ॥ ४ ॥

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः ॥ ५ ॥**

यस्माच्चैवं पुरुषो यज्ञस्तस्मात्तं माता जनयिष्यति तदा तां लोकाः सोष्यतीत्याहुर्यदा च सा प्रसूता भवति तदा तामसोष्ट प्रसूतेत्याहुः । तदेतत्सो-

ष्यत्यसोष्टेतिशब्दसंबन्धित्वमेवास्य पुरुषस्य विधियज्ञस्यैव पुनरुत्पादनं। पुरुषस्य मरणमेवावभृथो मरणे तद्दृष्टिः कार्या ॥ ५ ॥

विशिष्टपुरुषसंबन्धकीर्तनेन विद्यां स्तोतुं तदङ्गभूतं मन्त्रत्रयं च विधातुमुपक्रमते—

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥**

तदेतद्यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्रायोक्त्वोवाच वक्ष्यमाणम्। कृष्णस्य विद्याफलमाह—अपिपास इति। स कृष्ण एतद्दर्शनं श्रुत्वा अपिपास एवान्याभ्यो विद्याभ्यो वितृष्णो बभूवातः श्रेष्ठा विद्या। किमुवाचेत्यपेक्षायां तदाह—स इति। स कृष्णोऽन्तवेलायां मरणकाले एतन्मन्त्रत्रयं प्रतिपद्येत जपेत्। किं तत्। अक्षितमक्षीणमक्षतं वादित्यात्मकं तत्वमसि। अच्युतं स्वरूपादप्रच्युतं तत्त्वमसि। प्राणः श्वासः संशितं सम्यक् तनूकृतं प्राणश्च संशितं सूक्ष्मं तत्वमिति यावत्। इतिशब्दो यजुर्मन्त्रत्रयस्य समाप्तिद्योतकः। मन्त्रत्रयप्रतिपाद्ये सावित्रे तत्वे प्रतीतिदार्ढ्यायाह—तत्रेति। तस्मिन्मन्त्रोक्तेऽर्थे एते द्वे ऋचौ मन्त्रौ विद्यास्तुतिपरौ भवतो न जपार्थौ ॥ ६ ॥

**आदित्प्रत्नस्य रेतसः उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥ इति सप्तदशः खण्डः ॥ १७ ॥**

तत्र आदित्प्रत्नस्य रेतस इति प्रतीकत्वेन गृहीतप्रथमर्चो 'ज्योतिः पश्यंति वासरं परो यदिध्यते दिवि' इति शेषभागः। आत् इत् इत्यत्र तकारेच्छब्दावनर्थकौ आकारश्च व्यवहितेन संबध्यते। प्रत्नस्य पुराणस्यातएव रेतसो बीजभूतस्य जगतः कारणस्य वासरमहरहरिव स्वप्रकाशं ज्योतिः परः परमुत्कृष्टं दिवि द्योतनवति परब्रह्मणि यत् इध्यते दीप्यते तदा

पश्यंत्यासमन्ताद्भावेनानुभवंति साधनसंपन्नाः। उत् वयं इति छेदः। तमसोऽज्ञानस्य निवर्तकं ज्योतिरुत्तरमपरज्योतिरपेक्षयोत्कृष्टतरमूर्द्धतरं वादित्यस्थं परिपश्यन्तो वयं। स्वः आत्मीयं हृदिस्थं च ज्योतिरिति पश्यन्त उभयोरेकीकृत्यावलोकयन्तो वयं देवत्रा देवेषु देवं द्योतनात्मकं जगतो रश्मीनां प्राणिनां च सुष्ठु ईक्षणात्सूर्यमुत्तमं ज्योतिरितरापेक्षयोत्कृष्टतममुदगन्मोद्गतवन्तः। अभ्यासो यज्ञपरिकल्पनासमाप्त्यर्थः॥ ७॥ इति पञ्चमे सप्तदशः खण्डः १७

ब्रह्मणो गुणस्यैकदेशत्वेन मन आकाशश्चोक्तस्तद्ग्रहणाशक्ताय मनआकाशयोः संपूर्णब्रह्मदृष्टिमाह—

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च॥ १॥**

मनः प्रतीकं ब्रह्मेत्युपासीत। तत्रोपलभ्यमानत्वादितिदर्शनमध्यात्ममात्मानमधिकृत्य प्रवर्तमानम्। अथानन्तरमधिदैवतं देवताविषयमिदमुपासनमाकाशो ब्रह्मेति सूक्ष्मत्वादिसाधर्म्यादित्युभयमादिष्टमुपदिष्टं भवत्यध्यात्मं चाधिदैवतं च॥ १॥

**तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च॥ २॥**

तदेतदुभयविधं ब्रह्म चतुष्पात्। तत्र मनोब्रह्मणो वाक् पादः। वक्तव्यस्य मनसि प्रतिष्ठानात्पाद इव पादः। तथा प्राणो घ्राणः पादश्चक्षुष्पादः श्रोत्रंपाद इत्यध्यात्मं। अथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद आकाशब्रह्मणः। आकाशेऽग्न्यादीनां लग्नत्वेनोपलभ्यमानत्वादित्येवमध्यात्ममधिदैवतं चेत्युभयविधं चतुष्पाद्ब्रह्मादिष्टमुपदिष्टं भवति॥ २॥

आध्यात्मिकपादानामाधिदैविकैः पादैरधिष्ठेयतया संबन्धोऽनुचिन्तनीय इत्याह—

**वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा**

**भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥**

मनोब्रह्मण इतरपादापेक्षया वागेव चतुर्थः पादः । सोऽग्निनाधिदैवतेन ज्योतिषा भाति च दीप्यते तपति चौष्ण्यं करोति । यद्वा घृताद्याग्नेयाशनेनेद्धा वाग् भाति च तपति च वदनोत्साहवती स्यात् । एतदुपासनफलमाह—भाति चेत्यादि सुबोधम् ॥ ३ ॥

**प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ६ ॥ इत्यष्टादशः खण्डः ॥ १८ ॥**

प्राणो घ्राणो गन्धग्रहणाय वायुना भाति स इत्यादि सर्वं समानम् । अदृष्टफलं त्वत्र ब्रह्मसम्पत्तिरिति बोद्धव्यं । अभ्यास उक्तदर्शनसमाप्त्यर्थः ॥ ४—६ ॥ इति पञ्चमे अष्टादशः खण्डः ॥ १८ ॥

ब्रह्मणश्चतुर्थपादत्वेनोक्ते आदित्ये सकलदृष्टिविधानार्थमाह—

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्रआसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥**

आदित्यो ब्रह्मेत्यादेशः । तस्यादित्यस्योपव्याख्यानं क्रियते तदाह—असदिति । इदं दृश्यमानं व्याकृतं जगदग्रे व्याकरणात्प्रागवस्थायामसदिवासीदनभिव्यक्तरूपनामैवासीन्न तु सर्वथाऽसदेव । तदेव सदासीद्बीजस्योच्छूनतावत्कार्योन्मुखीभूतमासीत् । ततश्च तदेव समभवत्प्राप्तपरिणामं सद्भूत-

सूक्ष्माकारेण बभूव। ततश्च तदेव पञ्चीकरणद्वारा। आण्डमिति दैर्घ्यं छान्दसं। अण्डं जगद्गर्भं निरवर्तत। निर्वृत्य तदण्डं संवत्सरस्य प्रसिद्धस्य मात्रां परिमाणमभिन्नस्वरूपमेवाशयत स्थितं। ततस्तदण्डं निरभिद्यत। निर्भिन्नस्य तस्याण्डस्य ते द्वे कपाले द्विदले रजतं च सुवर्णं चाभवतां संवृत्ते॥ १॥

**तद्यद्रजतꣳ सेयं पृथिवी यत्सुवर्णꣳ सा द्यौर्यज्जरायु ते पर्वता यदुल्बꣳ समेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रः॥ २॥**

तत् तयोः कपालयोर्मध्ये यद्रजतकपालं सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमिति यावत्। यत्सुवर्णकपालं सा द्यौर्द्युलोकोपलक्षितमूर्द्धकपालं। यज्जरायु गर्भवेष्टनं स्थूलमासीत्ते पर्वताः। यदुल्बं सूक्ष्मं गर्भवेष्टनं तत्समेघो नीहारो मेघेन सहवर्तमानो नीहारो हिमं। जातस्य गर्भस्य देहे या धमनयः शिरास्ता नद्यो बभूवुः यत्तस्य। बस्तौ संभवं बास्तेयमुदकं स समुद्रः२

**अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः॥ ३॥**

अथ यत्तस्मिन्नण्डे यत्तद्गर्भरूपमजायत सोऽसौ प्रसिद्ध आदित्यस्तमादित्यं जायमानं अनु घोषाः शब्दाः किंलक्षणा उलूलवः रलयोः सावर्ण्यात् उरूरवो विस्तीर्णरवाः उदतिष्ठन्नुत्थितवन्तः। सर्वाणि च स्थावरजंगमानि भूतान्युदतिष्ठन्। तेषां च सर्वे कामा विषयास्त्र्यादय उदतिष्ठन्। अत्र मानमाह—तस्मादिति। यस्मादादित्यभूतजन्मनिमित्ता भूतकामोत्पत्तिस्तस्माद्द्यत्वेपि तस्यादित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्तगमनं च प्रति घोषा इत्याद्युक्तार्थम् ३

एतदुपासनफलमाह—

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन्॥ ४॥ इत्येकोनविंशः खण्डः॥१९॥**

इति छान्दोग्यब्राह्मणे पंचमः प्रपाठकः॥ ५॥ उपनिषदि तृतीयः॥ ३॥

स यः कश्चिदेतमादित्यमेवं यथोक्तमहिमानं विद्वान् जानन्नादित्यं ब्रह्मेत्युपास्ते एवमुपासकं साधवः शोभना अनिषिद्धा शब्दा आचगच्छेयुरागच्छेयुश्चेति यत्तदभ्याशो ह क्षिप्रमेव। किंच ते घोषाः उप च निम्रेडेरन् उपसुखयेयुश्च सुखं च कुर्युः। एतद्दृष्टं फलमदृष्टं तूक्तोपास्यप्राप्तिः। अभ्यास आदित्यब्रह्मदृष्ट्याद्यादरार्थः ॥ ४ ॥ इति पञ्चमे एकोनविंशः खण्डः ॥ १९ ॥

यत्साक्षाद्रविमध्वपूपनिलयं गायत्र्यवस्थंत्रिपाद्
ब्रह्म स्वोदरजातवेदसि गतं सर्वं जगद्यन्मयम् ॥
यत्प्राप्त्यै स्वसुतायुरर्थमपि यद्रूपान्तरं मारुतं
यज्ञादीन्समुपासते श्रुतिविदस्तं नौमि सिंहाननम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां तृतीयोऽध्यायः ॥ ३ ॥

---

अथ चतुर्थोऽध्यायः ॥ ४ ॥

आदित्यस्य सूत्रावच्छेदत्वात्तदुपासनानन्तरं सूत्रात्मोपासनं विधातुं तावद्दानादीनां विद्याप्राप्तिसाधनत्वप्रदर्शनार्थमाख्यायिकां रचयति—

**ॐ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥**

जनश्रुतस्यापत्यं जानश्रुतिर्ह पुत्रस्य पौत्र इति पौत्रायणः। श्रद्धापुरःसरं देयमस्येतिश्रद्धादेयः। बहु प्रभूतं दातुं शीलमस्येति बहुदायी बहु पक्तव्यं भोजनार्थिभ्यो यस्येति बहुपाक्य आस कस्मिंश्चिद्देशे। स जानश्रुतिर्ह सर्वतः सर्वासु दिक्षु एत्य वसंति येष्वित्यावसथास्तानावसथान्वसतिस्थानानि मापयांचक्रे कारितवान्। सर्वतः सर्वेष्वेवावसथेषु मे ममान्नं लोका अत्स्यंति इत्यभिप्रायवान् ॥ १ ॥

विशिष्टान्नदानफलं दर्शयितुमाह—

**अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जा-**

**नश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्माप्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥**

अथैवं सति कस्मिंश्चिद्धर्मकाले निशायां रात्रौ हर्म्यतलस्थे राजनि सति हंसरूपाः ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः संतो हंसरूपा भूत्वा राज्ञो दर्शनगोचरे निपेतुः पतितवन्तः। तस्मिन्काले तेषां मध्ये पृष्ठपाती हंस एनमग्रपातिनं हंसं हो हो भो भो अयीति कोमलं संबोध्य भल्लाक्ष भल्लाक्ष भद्राक्ष भद्राक्षेत्यादरं पश्यपश्येतिवद्दर्शयन्नभ्युवादाभ्युक्तवान्। किं। जानश्रुतेः पौत्रायणस्य दिवा अह्ना द्युलोकेन वा समं ज्योतिराततं व्याप्तं मा प्रसाङ्क्षीः प्रसंजनं मा कार्षीस्तेन ज्योतिषा सह संबन्धं मा कार्षीः। तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीरिति पुरुषव्यत्ययेन मा प्रधाक्षीत् मा दहतु ॥ २ ॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳसयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥ ३ ॥**

तमेवमुक्तवन्तं पृष्ठगामिनं हंसं तु ह परोऽग्रगामी हंसः प्रत्युवाच। कम्वर इति। कं उ अरे इति छेदः। अरे हंस एनं प्राणिमात्रं संतं राजानमधिकृत्य कं किमु पूर्वोक्तवचनमात्थ कथयसि रैक्कमिव। कथंभूतं रैक्कं सयुग्वानं युगं वहतीति युग्यो बलीवर्दः सोऽस्यास्तीति युग्वा शकटी तया सह वर्तते [इति सयुग्वा[1] तमिव। अयुक्तमस्मिन्नीदृशं वक्तुं रैक्क इवेत्यभिप्रायः। इत्युक्तेन पृष्ठगामिना यः सयुग्वा रैक्कस्त्वयोच्यते स कथं नु स्यात्] ॥ ३ ॥

इति पृष्टः पुरोगामी हंसः सदृष्टान्तं सयुग्वानं तमाह—

**यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्सवेद स मयैतदुक्त इति ॥ ४ ॥**

यथा लोके द्यूतक्रीडासाधनीभूताक्षशब्दितस्यैको भागश्चतुरङ्कः संज्ञया कृताय एव सन्नत्र कृतमित्युच्यते। तस्मै कृताय विजिताय विजयार्थमधरेयाः न्यूनारूयंकद्व्यंकैकांकाः क्रमेण त्रेताद्वापरकलिनामानः संयंति संगच्छन्ति।

---

१ त्रुटितमिदं मूलपुस्तके। तन्मया भगवत्पादीयभाष्यमानन्दगिरिकृतटीकां चावेक्ष्य संधितम्।

तत्रान्तर्भवन्ति न्यूनसंख्याया अधिकसंख्यायामन्तर्भूतत्वात् । यथायं दृष्टान्त एवमेवैनं रैक्वं कृतायस्थानीयमभिव्याप्य सर्वं त्रेताद्वापरकलिस्थानीयं समैत्यन्तर्भवति । किं तत्सर्वं । यत्किञ्चिल्लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति तत्सर्वं रैक्वधर्मे तत्फले चान्तर्भवतीत्यर्थः । न केवलं रैक्वस्यैतन्माहात्म्यं किन्तु सर्वस्यापि तादृग्ज्ञानवतस्तदस्तीति जानश्रुतेरनुग्रहार्थमाह—यस्तद्वेदेति । यद्वेद्यं स रैक्वो वेद तद्वेद्यं योऽन्योपि वेद स विद्वान् मया एतदेवं रैक्ववत् कृतायस्थानीय उक्त इति यावत् । इतिशब्दो हंसवाक्यसमाप्त्यर्थः ॥ ४ ॥

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥ यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥**

तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य च प्रशंसारूपं उ ह जानश्रुतिः पौत्रायणः शुश्राव श्रुतवान् । स राजा संजिहान् एव शयनं परित्यजन्नेव क्षत्तारं सारथिनं स्तुतिं कुर्वाणमुवाच । किं । अंग हे वत्स त्वं कथं सयुग्वानं रैक्वमिव मामात्थ स्तौषि । स एव स्तुत्यर्हो नाहमिति भावः । यो नु कथमित्यादि क्षत्तृराज्ञोः प्रश्नप्रतिवचने उक्तार्थे ॥ ५ ॥ ६ ॥

**स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥ ७ ॥**

स राज्ञोऽभिप्रायज्ञः क्षत्ता ह ग्रामादौ रैक्वमन्विष्यान्वेषणं कृत्वा नाविदं न विज्ञासिषमिति ब्रुवन् प्रत्येयाय प्रत्यागतवान् । तं क्षत्तारं ह राजोवाच । किं । अरे क्षत्तः यत्र यस्मिन्नेकांतादौ ब्राह्मणस्य ब्रह्मविदोऽन्वेषणानुमार्गणं भवति तत्रैनं रैक्वं ऋच्छ गच्छान्वेषणं कुरु ॥ ७ ॥

एवमुक्तः—

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व**

**इत्यह॑ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥**

स क्षत्तान्विष्य तं विजने देशे शकटस्य गन्त्र्याः अधस्तात्पामानं खर्जूं कषमाणं कण्डूयमानं दृष्ट्वोपविवेशोपसमीपे उपविष्टवान् । उपविश्य तं रैक्कं हाभ्युवादोक्तवान् । किं । नु वितर्के । हे भगवो भगवन् त्वं सयुग्वा रैक्क इत्युक्त अहं हि एव अरा इति प्लुतिरनादरार्था अरे अहमेवेति ह प्रतिजज्ञे प्रतिज्ञां कृतवान् रैक्कः । स क्षत्ता ह अविदं विज्ञातवान् रैक्कं गार्हस्थ्यार्थिनमिति ब्रुवन् प्रत्येयाय प्रत्यागत इत्यर्थः ॥ ८ ॥ इति षष्ठे प्रथमः खण्डः॥१॥

**तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे त॑ हाभ्युवाद ॥ १ ॥**

तत्तस्मिन् क्षत्तृवचने श्रुते सति उ एव ह जानश्रुतिः पौत्रायणो गवां षट् शतानि निष्कं कंठ्यं हारं अश्वतरीरथं अश्वतरीभ्यां युक्तं रथं तदेतद्धनमादाय गृहीत्वा प्रतिचक्रमे रैक्कं प्रति गतवान् । गत्वा च तं रैक्कं ध ह अभ्युवाद अभ्युक्तवान् ॥ १ ॥

किं—

**रैक्केमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवता॑ शाधि यां देवतामुपास्स इति ॥ २ ॥**

हे रैक्केमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथः आदत्स्व । मे इति कर्मणि षष्ठी । मामेतां देवतामनुशाधि यां देवतां त्वमुपास्से । तद्देवतोपासनेन मां शिक्षयेति यावत् ॥ २ ॥

**तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥**

तमेवमुक्तवन्तं राजानं उ ह परो रैक्कः प्रत्युवाच । किं । अहेति निपातोऽनर्थकः । गोभिः सह हारेत्वा हारेण युक्त इत्वा गन्त्री हे शूद्र तवैवास्तु

शुचन्दुद्राव जानश्रुतिः । शुचा वा कर्त्र्या दुद्रुवे । शुचा करणभूतया वा रैक्वं प्रति दुद्राव प्राप्तवानिति । सर्वं समानमन्यत् ॥ ३ ॥

**तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥ तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥**

इयं जाया जायार्थं मम दुहिता आनीता । अयं च ग्रामस्त्वदर्थं मया कल्पितो यस्मिन् ग्रामे त्वमास्से तिष्ठसि । एतत्सर्वं गृहीत्वा भगवः मा मामनुशाधीत्येवमुक्तो मुनिस्तस्याः जायार्थमानीतायाः दुहितुर्विद्याप्रदाने मुखं द्वारतामुपोद्गृह्णन् जानन्नुवाच । किं । आजहाराहृतवानसि यदीमाः हे शूद्र तर्ह्यनेनैव गवादिधनेन मुखेन विद्याग्रहणद्वारेण शास्त्रोक्तोपायेनालापयिष्यथा आलापयसि विद्यां देहीति भणसीत्यर्थः । रैक्वेण ग्रामादिकमादाय विद्योपदिष्टेत्यस्मान् श्रुतिर्ज्ञापयति—ते हैत इति । यत्र येषु ग्रामेषूवासोषितवान् रैक्वस्तानस्मै रैक्वाय ददौ इति शेषः । ते हैते राजदत्ताः ग्रामाः महावृषेषु महापुण्यदेशेषु रैक्वपर्णा नाम विख्यातास्तत्र स्थित्वा तस्मै राज्ञे ह विद्यामुवाच ॥ ४ ॥ ॥ ५ ॥ इति षष्ठे द्वितीयः खण्डः ॥ २ ॥

कथं—

**वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

वायुर्वाव बाह्यो वायुरेव संवर्गः । कथं । यदा यस्मिन्काले वै अग्निरुद्वायत्युद्वसनं प्राप्नोति शाम्यति तदासौ वायुमेवाप्येति वायुस्वाभाव्यं गच्छति । यदा सूर्य इत्यादि समानम् ॥ १ ॥

**यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥**

आप उच्छुष्यंत्युच्छोषमाप्नुवन्ति । अत्र हेतुमाह—वायुर्हीति । हि यस्माद्वायुरेवैतानग्न्यादीन्संवृंक्ते ग्रसत्यतो वायुः संवर्गगुण उपास्य इत्यधिदैवतं देवतासु संवर्गदर्शनम् ॥ २ ॥

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳश्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥**

अथानन्तरमध्यात्ममात्मानमधिकृत्य प्रवर्तमानं संवर्गदर्शनमिदमुच्यते । प्राणो वाव मुख्यः प्राण एव संवर्गः । कथं । स पुरुषो यदा यस्मिन्काले स्वपिति स्वापं प्राप्नोति तदा मुख्यप्राणमेव वागप्येति । समानमन्यत् । कुतः । प्राण एव हि यस्मादेतान्सर्वान्वागादीन्संग्रसति ॥ ३ ॥

उक्तगुणौ वायुप्राणावुपसंहरति—

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥**

तावेतौ वै द्वौ संवर्गौ संवर्गगुणकौ । देवेष्वग्न्यादिषु वायुः संवर्गः । प्राणेषु वागादिषु मुख्यः प्राणः संवर्गः ॥ ४ ॥

एतयोः स्तुत्यर्थमाख्यायिकामारचयति—

**अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥**

अथ संवर्गगुणकोत्त्यनन्तरं ह शुनकस्यापत्यं शौनकं च पुरोहितं कपेर्गोत्रापत्यं कापेयं, अभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं क्षत्रियं एतौ भोजनायोपविष्टौ परिविष्यमाणौ पाचकैर्भाजने दीयमानान्नौ ब्रह्मचारी ब्रह्मविदभिमानी बिभिक्षे भिक्षितवान् । अस्य ब्रह्मविन्मानित्वं बुद्ध्वा किमयं वक्ष्यतीति जिज्ञासमानौ तस्मै ब्रह्मचारिणे उह अपि भिक्षां न ददतुर्न दत्तवन्तौ ॥ ५ ॥

ततः—

**स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति**

**मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एत-
दन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥**

स ब्रह्मचारी ह उवाच । किं । य एको देवः भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः सर्वो लोकस्तस्य गोपा रक्षिता चतुरोऽग्न्यादीन् वागादींश्च महात्मनो महावीर्यवतः य एको देवो जगार ग्रसितवान्स क इति प्रश्नार्थः । यद्वा सः कः प्रजापतिर्वायुः प्राणात्मा वा कापेय हे अभिप्रतारिन् तं देवं बहुधा अध्यात्माधिदैवाधिभूतरूपबहुप्रकारैः वसन्तं मर्त्याः मरणधर्माणोऽविवेकिनो वा नाभिपश्यन्ति न जानन्ति । एतदज्ञानं भवतोरेवेत्याह—यस्मा इति । यस्मै यदन्नं संस्क्रियते तस्मै प्रजापतये एवैतदन्नं न दत्तं युवाभ्यां यन्मह्यं न दत्तमिति ॥ ६ ॥

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजाना<sup></sup>ँ हिरण्यदँष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥**

तद्ब्रह्मचारिवचनं शौनकः कापेयः प्रतिमन्वानो मनसालोचयन् तं प्रत्येयाय जगामोवाच । हे ब्रह्मचारिन्मर्त्या न पश्यन्तीति यं त्वमवोचस्तं वयं पश्याम इत्याह—आत्मेति । देवानामग्न्यादीनामात्मा प्रजानां च स्थावरजंगमानां जनिता । यद्वा प्रलयसुषुप्तिकाले क्रमेण वायुप्राणरूपेण च स्वात्मनि ग्रसित्वा देवादीनामग्न्यादीनां वागादीनां पुनः सर्गप्रबोधकाले वायुप्राणरूपेणैव जनितोत्पादयिता बभसो भक्षणशीलः संहर्तृशीलोऽपि हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदंष्ट्रः अनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिरस्य प्रजापतेर्महिमानं विभूतिं महान्तमप्रमेयमाहुर्ब्रह्मविदः । कुतः । यस्मात्स्वयमन्यैरनद्यमानोऽभक्ष्यमाणः सन् अनन्नमग्निवागादिदेवतारूपमत्ति भक्षयतीति । अस्त्वेवं प्रजापतिरूपं तव किमित्यत आह—वै वयमिति । वैशब्दोऽनर्थकः । ब्रह्मचारिन् आ इदमिति पदच्छेदः । हे ब्रह्मचारिन् इदमुक्तरूपं ब्रह्म वयमा समन्तादुपास्महे । यद्वा ब्रह्मचारिन् न इदमिति छेदः । इदं यथोक्तं नोपा-

रूपेण पततीति यावत् । क्षीणकर्माणोऽनुशायिन इह पृथिव्यां व्रीहियवा औषधिवनस्पतयस्तिलमाषा इत्येवं प्रकारा जायन्ते । आकाशादिवर्षणान्तेष्विव पूर्वसिद्धजातिस्थावरैः संश्लिष्यन्ते नतु स्वयमेव व्रीह्यादिस्थावरत्वं जनयन्ते इति यावत् । अतोऽस्माद्व्रीह्यादिसंश्लेषभावाद्वै खल्विति खेदे । दुर्निष्प्रपतरं अत्रैकस्तकारो लुप्तो ज्ञेयः । अतिशयेन दुःखेन निष्प्रपतं इति दुर्निष्प्रपततरं दुर्निष्क्रमणतरं । कथं । यो यो हि यः कश्चिद्धि कदाचित् अनुशायिभिः संश्लिष्टमन्नमत्ति यः कश्चिदृतुकाले स्त्रीयोनौ रेतः सिञ्चति तदा तद्भूय एव तद्भाव एव रेतःसिगाकृतिरेव भवति ॥ ६ ॥

तथा चन्द्रमण्डलादवरोहतां व्रीह्यादिसंश्लिष्टानां तत्राध्यासिकसंबंधाभावेन देहाद्यभावाद्विशेषज्ञानाभावेन वेदनाहीनानां द्राघीयसा कालेन देहांतरारंभोक्तेराकाशादिसंश्लिष्टानुशायिनां मध्ये—

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ॥ ७ ॥**

ये इहलोके पूर्वं रमणीयचरणाः शोभनाचरणाः पुण्यकर्माणस्ते रेतःसिग्योगे सति रमणीयामेव पुण्यकर्मणामेव योनिं प्रतिपद्येरन्निति यत्तदभ्याशो ह क्षिप्रमेव । तामेव योनिं दर्शयति—ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति । अथ पुनर्ये इहलोके पूर्वं कपूयचरणाः कुत्सितचरणाः पापकर्माणस्ते कपूयामेव योनिं कुत्सितामेव पापयोनिमेव रेतःसिक्योगानन्तरं प्रापद्येरन्निति यत्तदभ्याशो ह क्षिप्रमेव । तामेव पापतारतम्यकृतां दर्शयति श्वयोनिं वेत्यादिना ॥ ७ ॥

एवं द्वितीयप्रश्नप्रतिवचनोक्त्या चतुर्थस्याप्यर्थात्प्रतिवचनमुक्तमपि पुनस्तस्यैव साक्षात्तदाह—

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रि-**

**यस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥**

अथशब्दः स्थानान्तरोपक्रमार्थः । एतयोर्यथोक्तयोः पथोर्मध्ये कतरेण चनापि न यंतीति शेषः । यथोक्तपथिसाधनं ज्ञानं वा कर्म वा नानुतिष्ठ इति यावत् । तानीमानि क्षुद्राणि दंशमशकादीनि भूतानि असकृद्वारंवारं आवर्तीनि आवर्तनशीलानि भवन्ति । जायस्व म्रियस्व पुनःपुनरत्रैव जायन्ते उत्पद्यन्ते म्रियन्ते च । अथवेश्वरः प्रेरयति त्वं पापी जायस्व म्रियस्वेति । एतज्जन्तुलक्षणं पूर्वोक्तपन्थानावपेक्ष्य संसरतां तृतीयं स्थानं । तेन क्षुद्राणां परलोकं प्रत्यगमनेन गतानामपि कर्मिणां पुनरावर्तनेन हेतुनाऽसौ स्वर्गलोको न संपूर्यते प्राणिभिर्न संपूर्णीभवतीत्यर्थः । एवमुक्तसंसारगतिप्रयोजनमाह—तस्मादिति । यस्मादेवमनवरतं जन्ममरणवेदनानुभवरूपा दुस्तरा संसारगतिस्तस्मात्तां जुगुप्सेत बीभत्सेतेत्यर्थः । उक्तपञ्चाग्निविद्यां स्तौति—तदिति । तत्तस्मिन्पञ्चाग्निविद्यामाहात्म्यलक्षणेऽर्थे एष श्लोको मन्त्रः ॥ ८ ॥

**स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति ॥ ९ ॥**

हिरण्यस्य ब्राह्मणसुवर्णस्य स्तेनो हर्ता, ब्राह्मणः सन् सुरां पिबंश्च, गुरोस्तल्पं गुरुदारानावसन् गच्छन्, ब्रह्महा ब्राह्मणस्य हंता चैते चत्वारः पतन्ति । तैश्चतुर्भिः सहाचरन् चतुर्णामन्यतमेनापि संगं कुर्वन्पतति । इतिशब्दो-मन्त्रसमाप्तिद्योतकः ॥ ९ ॥

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न स ह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥ इति दशमः खण्डः ॥ १० ॥**

अथ पुनर्यः कश्चित् ह वै एवं उक्तानेतान्पञ्चाग्नीन्वेदोपास्ते स एतैर्महापातकिभिः सहाचरन्संगं कुर्वन्नपि न पाप्मना लिप्यतेऽतः शुद्ध एव यस्मात्पूतः पञ्चाग्निदर्शनेन पावितोऽतः पुण्यः शुभफलः प्राजापत्यादिर्लोको यस्य सोऽयं पुण्यलोको भवति । कोसावित्यत आह—य एवमिति । य एवं पञ्चभिः प्रश्नैः

पृष्टमर्थंजातं वेद । द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥१०॥ इति सप्तमे दशमः खण्डः ॥१०॥

दक्षिणेन पथा गच्छतां तं देवा भक्षयन्तीत्युक्तान्नभावरूपदोषस्योक्तक्षुद्रजन्तुलक्षणसंसारगतिरूपदोषस्य च परिजिहीर्षयाऽत्तृभावसाधनं वैश्वानरोपासनं सुखबोधाद्यर्थमाख्यायिकापूर्वकं विधत्ते—

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥**

प्राचीनशालो नामतः उपमन्योरपत्यमौपमन्यवः । सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिः । इन्द्रद्युम्नो नामतो भल्लवस्यापत्यं भल्लाविस्तस्यापत्यं भाल्लवेयः । जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः । बुडिलो नामतः अश्वतराश्वस्यापत्यमाश्वतराश्विः । ते हैते पञ्चापि महाशालाः महत्यः शालाः गृहा येषामिति तथा । महागृहस्थाः महाश्रोत्रियाः महान्तः संतः श्रोत्रियाः श्रुताध्ययनसंपन्नाः समेत्य संभूय मीमांसां विचारणं चक्रुः कृतवन्तः । कथं । को नोऽस्माकमात्मा किं ब्रह्मेति ब्रह्माभिन्नः प्रत्यगात्मा कः ॥ १ ॥

इत्येवं मीमांसंतः—

**ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥**

ते निश्चयमलभमानाः ह आत्मन उपदेष्टारं संपादयाञ्चक्रुः । कथं । उद्दालकोऽयमारुणिः संप्रति इममस्मदभिप्रेतमात्मानं वैश्वानरमध्येति सरतीत्यतो हे भगवन्तो वयं तमुद्दालकं हंतेदानीमभिगच्छामाभिसमंताद्भावेन गच्छामेत्येवं निश्चित्य तमुद्दालकमभ्याजग्मुर्गतवन्तः ॥ २ ॥

तदागमनं बुद्ध्वा—

**स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महा-**

**शाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥**

स आरुणिः संपादयाञ्चकार । कथं । इमे प्राचीनशालप्रभृतयोमहाशाला महाश्रोत्रियाः मां वैश्वानरात्मानं प्रक्ष्यंति प्रश्नं करिष्यन्ति । तत्पृष्टं चाहं न तेभ्यः सर्वमिव सर्वमेव प्रतिपत्स्ये प्रतिवचनं वक्तुं नोत्सहेऽतो हंतेदानीमहमेषामन्यमुपदेष्टारमभ्यनुशासानि वक्ष्यामि ॥ ३ ॥

इत्येवं संपाद्य—

**तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥**

तान्प्रति ह उद्दालक उवाच । किं । हे भगवन्तो अयमश्वपतिर्नामतः केकयस्यापत्यं कैकेयः संप्रतीममात्मानं वैश्वानरं अध्येति स्मरत्यतो वयं तं प्रति हन्तेदानीमभ्यागच्छामाभ्युपगच्छामेत्येवमुक्त्वा तमश्वपतिं प्रति तेऽभ्याजग्मुरुपजग्मुः ॥ ४ ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥**

तेभ्यो ह प्राप्तेभ्योऽश्वपतिः पृथक्पृथगर्हाणि अर्हणानि पुरोहितादिभिः कारयाञ्चकार कारितवान् । स राजा परेद्युः सञ्जिहानः शयनं त्यजन् प्रातःकाले इदं धनं मत्तो गृह्णीतेत्युवाच । तैः प्रत्याख्यातस्तदभिप्रायानभिज्ञः आत्मनः सद्वृत्तितां प्रतिपादयिषन्नाह—न म इति । न मे मम जनपदे देशे स्तेनः परस्वहर्ता । न कदर्योऽदाता सतिविभवे । न मद्यपो द्विजोत्तमः सन् । नानाहिताग्निः शतगुःसन् । नाविद्वानधिकारानुरूपविद्यावर्जितः । न स्वैरी परदारेषु गन्तातः स्वैरिणी दुष्टचारिणी कुतः । धनाल्पत्वनिमितं वा प्रत्याख्यानं भविष्यतीति मत्वाह—यक्ष्यमाण इति । हे भगवन्तोऽहं यक्ष्यमाणो यागं

करिष्यमाणोऽस्मि । यावच्छास्त्रोक्तं धनमेकैकस्मै ऋत्विजे दास्यामि तावद्धनं प्रत्येकं भवतो दास्यामि वसंतु भगवन्त इति ॥ ५ ॥

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳहैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥**

एवमुक्तास्ते ह राजानं प्रति स्वाभिप्रायमूचुः । किं । येन हैवार्थेन प्रयोजनेन पुरुषोऽयं प्रतिचरेद्गच्छेत्तं हैवार्थं प्रयोजनं वदेत् । तं चात्मानं वैश्वानरं संप्रत्यध्येषि स्मरसि अतस्तमेवात्मानं वैश्वानरं नोऽस्मभ्यं ब्रूहि कथय । तदर्थिनो वयं न धनार्थिनः ॥ ६ ॥

इत्येवमुक्तोऽनुपसन्नाय न वक्तव्यमित्यभिप्रायः—

**तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥ ७ ॥ इत्येकादशः खण्डः ॥ ११ ॥**

तानुद्दालकप्रभृतीन्ह उवाच । किं । प्रातःकाले वो युष्मभ्यमहं प्रतिवक्ता प्रत्युत्तरं दातास्मीत्युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ताः परेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । राजा च तानुपागतान् ब्राह्मणान् जातिश्रेष्ठत्वादनुपनीयैवोपनयनं पादयोर्निपतनमकारयित्वैवैतद्वक्ष्यमाणं वैश्वानरात्मज्ञानमुवाचेत्यर्थः ॥ ७ ॥ इति सप्तमे एकादशः खण्डः ११

विद्योपदेष्टुकामो राजा तान्प्रत्येकं पृच्छति—

**औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥**

हे औपमन्यव त्वं कमात्मानं वैश्वानरमुपास्से इत्येवं पृष्टो दिवमेव द्युलोकमेव वैश्वानरमहमुपासे हे भगवः पूजावन् राजन्नित्यौपमन्यवो होवाचेत्येवं शिष्योपन्यस्तविद्यायाः विषयं फलं चाह—एष इति । एष वै सुतेजाः शोभनतेजा वैश्वानरः आत्मात्मनोऽवयवभूतत्वात् । यं त्वं द्युलोकात्मकमुपास्से ।

तस्मात्सुतेजोवैश्वानरोपासनात्तव कुले एकाहादावग्निष्टोमे सुतं कण्डितं लताद्रव्यं अहीने च प्रसुतं सत्रे त्वासुतं दृश्यते ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥**

**इति द्वादशः खण्डः ॥ १२ ॥**

अत्सि भक्षयस्यन्नं दीप्ताग्निः सन्प्रियं पुत्रादि च पश्यसि । न केवलं प्राचीनशालस्यैवैतत्फलं किंत्वन्यस्याप्युपासकस्येत्याह—अत्त्यन्नमित्याद्युक्तार्थं स्पष्टार्थं च । यथोक्तज्ञानादेव कृतकृत्यत्वशंकां वारयति—मूर्द्धा त्विति । एष तु द्युलोकाख्य आत्मनो वैश्वानरस्य मूर्द्धा न समस्तोऽतः समस्तबुद्ध्योपासनान्मूर्द्धा ते तव विपरीतग्राहिणो व्यपतिष्यद्विपतितं अभविष्यद्यद्यदि मां प्रति नागतोऽभविष्य इत्यर्थः ॥ २ ॥ इति सप्तमे द्वादशः खण्डः ॥ १२ ॥

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥**

अथानन्तरं सत्ययज्ञस्यैव प्राचीनयोग्येतिनामान्तरेण संबोधनम् । आदित्यस्य विश्वरूपत्वं सर्वरूपत्वात् । तस्मादादित्योपासनात्तव कुले बहु विश्वरूपं नानारूपं भोगोपकरणं दृश्यते ॥ १ ॥

किञ्च त्वामनु—

**प्रवृत्तोश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥ २ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः दासीनिष्को दासीभिर्युक्तो

निष्को हारो दासीनिष्कः। चक्षुस्तु एतदात्मनो वैश्वानरस्य य आदित्यः। तस्य समस्तब्रह्मदृष्ट्योपासनादंधोऽभविष्यदित्याद्यन्यत्समानं ॥ २ ॥ इति सप्तमे त्रयोदशः खण्डः ॥ १३ ॥

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥**

इन्द्रद्युम्नस्यैव व्याघ्रपदो गोत्रापत्यत्वाद्वैयाघ्रपद्येति संबोधनं। पृथक् नानाविधानि वर्त्मानि यस्य स एवात्मा स्वभावो यस्य वायोः स पृथग्वर्त्मात्मा तदुपासनात्त्वां प्रति पृथक् नानादिक्काः बलयो वस्त्रान्नादिलक्षणा आयंत्यागच्छन्ति। पृथक् नानारथश्रेणयो रथपंक्तयोप्यनुयंत्यनुगच्छन्ति ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ इति चतुर्दशः खण्डः ॥ १४ ॥**

प्राणस्त्वेष वायुरात्मनो वैश्वानरस्य न संपूर्णः। प्राण उदक्रमिष्यदुत्क्रान्तोऽभविष्यत्। समानमन्यत् ॥ २ ॥ इति सप्तमे चतुर्दशः खण्डः ॥ १४ ॥

**अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥ २ ॥ इति पञ्चदशः खण्डः ॥ १५ ॥**

बहुलः आकाशस्य सर्वगतत्वात् । फलोक्तिः स्पष्टार्था । एष त्वाकाशो वैश्वानरात्मनः संदेहो देहमध्यभागः । संदेहः संदिह्यते उपचीयते इति संदेहः शरीरं ते तव व्यशीर्यत विशीर्णमभविष्यत् ॥ १ ॥ २ ॥ इति सप्तमे पञ्चदशः खण्डः ॥ १५ ॥

**अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥ १ ॥**

एष वै आपो वैश्वानरात्मा रयिः धनं अद्भ्योऽन्नं ततो धनमित्यपामन्नद्वारा तद्धेतुत्वात् ॥ १ ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥**

**इति षोडशः खण्डः ॥ १६ ॥**

एष त्वब्लक्षणो वैश्वानरात्मनो बस्तिः नाभेरधस्तादलाबुसदृशमधोनालमनेकछिद्रं मूत्रभाजनं बस्तिरुच्यते । बस्तिस्ते तव व्यभेत्स्यद्भिन्नोऽभविष्यत् ॥ २ ॥ इति सप्तमे षोडशः खण्डः ॥ १६ ॥

**अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥ इति सप्तदशः खण्डः ॥ १७ ॥**

पादौ त्वेतौ पृथिवीलक्षणौ वैश्वानरात्मनो न संपूर्णः । ते तव पादौ

व्यग्लास्येतां विग्लानौ शिथिलीभूतौ अभविष्येतामित्यर्थः ॥ १ ॥ २ ॥ इति सप्तमे सप्तदशः खण्डः ॥ १७ ॥

तेषां सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तदीयमिथ्याज्ञानमनुवदति—

**तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥**

तान्ब्राह्मणान्प्रति राजोवाच। किं। वैखल्विति तेषां मिथ्याज्ञानत्वप्रसिद्धिस्मरणार्थौ। एते यूयमपृथक्संतमिमं वैश्वानरं पृथगिव पृथगेव विद्वांसो ज्ञानवन्तोऽन्नमत्थ भक्षयथेत्यर्थः। अथ प्रधानविद्यामुपदिशति—यस्त्वेतमिति। यस्त्वेतं सर्वात्मकमेवं यथोक्तद्युमूर्द्धादिविशिष्टं प्रादेशमात्रं प्रादेशैर्द्युमूर्द्धादिभिः प्रत्यगात्मतया मीयते ज्ञायते इति प्रादेशमात्रस्तं प्रादेशमात्रं अभिविमानं प्रत्यगात्मतया सर्वैः प्राणिभिर्मीयत इत्यभिविमानं वैश्वानरं सर्वात्मकत्वाद्विश्वश्चासौ नरश्च सर्वकारणत्वेन विश्वेषां वायं नरः सर्वेश्वरत्वाद्विश्वे वा नरा नियम्या यस्यासौ विश्वानरो विश्वानर एव वैश्वानरोऽत्र प्रत्यग्ब्रह्मैव को न आत्मा किं ब्रह्मेत्युपक्रमानुरोधात्तं वैश्वानरं प्रत्यग्ब्रह्मोपास्ते। स उपासकः सर्वेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु आत्मतया व्यपदिश्यमानेषु देहेन्द्रियादिष्वन्नमत्ति सर्वात्मैव सन् ॥ १ ॥

कुत इत्यतो हेत्वर्थमुपासनाप्रकारविध्यर्थं चोक्तमनुवदति—

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥ इत्यष्टादशः खण्डः ॥ १८ ॥**

तस्य ह वै प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्याद्युक्तार्थं। प्रधानविद्यामुक्त्वा तदङ्गविद्यां भूमिकापूर्वकमाह—उर इति। तस्य वैश्वानरस्य भोक्तुरुर एव वेदिः समानाकारत्वात्। वेदिः स्थंडिलमात्रमग्निहोत्रानङ्ग-

त्वाद्दर्शपूर्णमासांगा हि सा। लोमानि बर्हिर्वेद्यामिवात्रास्तीर्णत्वात्। हृदयं गार्हपत्योग्निर्मनःप्रणयनहेतुत्वसामान्यात्। मनोऽन्वाहार्यपचनो दक्षिणाग्निः पचनहेतुत्वसामान्यात्। आस्यं मुखमाहवनीयोग्निरिति चिन्तयेदन्नस्य हूयमानत्वसामान्यादित्यर्थः ॥ २ ॥ इति सप्तमेऽष्टादशः खण्डः ॥ १८ ॥

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥ प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥**

तत्तत्रोक्तन्यायेनाग्निहोत्रे संपादिते सति भोजनकाले प्रथमं यद्भोक्तुमोदनादि भोज्यमागच्छेत्तद्धोमीयं होतव्यद्रव्यमिति चिन्तयेदाहुतिसाधनत्वसामान्यात्। स भोक्ता यां प्रथमामाहुतिं जुहुयात्तामाहुतिं प्राणाय स्वाहेति मन्त्रेण मुखे जुहुयात्। होमफलमाह—प्राण इति। तेनाहुतिप्रक्षेपेण प्राणस्तृप्यतीत्यादि सुबोधं। दिवि तृप्यंत्यां सत्यां यत्किञ्च प्राणिजातं द्यौश्चादित्यश्चाधितिष्ठतः अधिष्ठाय वशीकृत्य स्थितौ तदपि सर्वं तृप्यति। उपासकस्य फलमाह—तस्येति। तस्य सर्वस्य तृप्तिमनु भुञ्जानस्तृप्यतीति नु प्रत्यक्षं। किञ्च प्रजापशुभिरन्नं च तदाद्यं चानाद्यं तेन तेजसा त्वगादिदीप्त्या ब्रह्मवर्चसेन स्वाध्यायोत्थेन तेजसोपासकस्तृप्यतीत्यर्थः ॥ १ ॥ २ ॥ इति सप्तमे एकोनविंशः खण्डः ॥ १९ ॥

**अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिर-**

न्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इति विंशः खण्डः ॥ २० ॥

अथ यां द्वितीयां ॥ २० ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इत्येकविंशः खण्डः ॥ २१ ॥

तृतीयां ॥ २१ ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इति द्वाविंशः खण्डः ॥ २२ ॥

चतुर्थीं ॥ २२ ॥

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥

पञ्चमीमित्यादि समानम् ॥ १ ॥ २ ॥ इति सप्तमे त्रयोविंशः खण्डः २३

प्रसिद्धाग्निहोत्रनिन्दाद्वारा वैश्वानरविदो यथोक्तमग्निहोत्रं स्तौति—

**स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥**

स यः कश्चिदिदं वैश्वानरदर्शनमविद्वान्सन्नैयमिकमग्निहोत्रं जुहोति यथाङ्गारानाहुतिप्रक्षेपयोग्यानपोह्य त्यक्त्वा भस्मनि जुहुयात्तादृक् तत्तुल्यं तदग्निहोत्रं स्यात् ॥ १ ॥

किञ्च—

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥**

अथ य एतद्वैश्वानरदर्शनमेवमुक्तरीत्या विद्वान् सांपादिकमग्निहोत्रं जुहोति तस्य वैश्वानरात्मविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थं ॥ २ ॥

किञ्च—

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥**

तत्तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्तो यथा लोके इषीकायाः मुञ्जमध्यवर्तिवालस्य तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत दह्येत एवमेव हास्य विदुषः सर्वे पाप्मानः धर्माधर्माख्याः प्रदूयन्ते दह्येरन् । किञ्च । य एवमुक्तरीत्यान्नादिकमग्निहोत्रं जुहोति भुंक्ते ॥ ३ ॥

**तस्मादु हैवं विद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥**

तस्मादेवाग्निहोत्राद्भोजनादुर्वरितं उ ह स एवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेद्दद्यात्तदस्योपासकस्यात्मनि हैव चाण्डालदेहस्थे वैश्वानरे तदन्नं हुतं स्यात् । एवमेव विद्यास्तुत्यर्थं सांपादिकमग्निहोत्रं स्तौति—तदिति । तत्तस्मिन्नग्निहोत्रस्तुतिलक्षणेऽर्थे एष श्लोको मन्त्रोऽपि भवति ॥ ४ ॥

**यथेह क्षुधिता बाला मातरं पर्युपासते ॥ एव सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५॥ इति चतुर्विंशः खण्डः ॥२४॥**

इति छान्दोग्यब्राह्मणे सप्तमः प्रपाठकः ॥ ७ ॥ उपनिषदि पञ्चमः ॥ ५ ॥

---

यथेहलोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नोऽन्नं प्रयच्छतीत्येवं सर्वाणि भूतान्यन्नादीन्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यत इति । सर्वविद्भोजनस्य सर्वजगत्तृप्तिहेतुत्वात् । द्विरुक्तिरध्यायसमाप्त्यर्था ॥ ५ ॥ इति सप्तमे चतुर्विंशः खण्डः ॥ २४ ॥

मुख्यं प्राणं यथाग्नीनपि गृहपतयः पञ्च वित्त्वा गृहस्थाः
स्वाचार्यैर्ये च वैश्वानरमखिलजगन्मूर्तिमात्मेत्युपास्य ।
कार्यं ब्रह्मार्चिषाप्ता पतिमुखनिरता (?) धूमतश्चन्द्रमाप्य
भ्रश्यंते यत्पदाज्ञा जनिमरणभजस्तं भजेऽहं नृसिंहं ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ॥ ६ ॥

तृतीयेऽध्याये सर्वं खल्विदं ब्रह्म तज्जलानिति जगतो ब्रह्मजनिलयस्थितित्वमुक्तं । तत्साधयितुमव्यवहिते चैकस्मिन्ब्रह्मविदि भुक्ते सर्वं जगत्तृप्यतीत्युक्तं । तच्चात्मन एकत्वे सत्येवोपपद्यते इति इदमपि च साधयितुं षष्ठोऽध्यायः प्रवर्तते । तत्र पित्रुपदेशत्वेन विद्यायाः सारिष्ठत्वद्योतनार्थमाख्यायिकां रचयति—

**ॐ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥**

श्वेतकेतुर्नामतः अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेय आस बभूव । तं पुत्रं ह पिता आरुणिरुवाच । किं । हे श्वेतकेतो गुरुं प्रति गत्वा ब्रह्मचर्यं वसाध्ययनार्थमित्यर्थः । एतदुभयं माभूदित्यत आह—न वै इति । हे

सोम्यासत्कुलीनोऽननूच्यानधीत्य ब्रह्मबन्धुरिव ब्राह्मणान्बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तस्तद्रूयं न वै नैव युक्तम् ॥ १ ॥

इत्येवं पित्रोक्तः—

**स ह द्वादशवर्ष उपेत्य चतुर्विँशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तँ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥**

स पुत्रो द्वादशवर्षः सन्नाचार्यमुपेत्य गत्वा यावच्चतुर्विंशतिवर्षो बभूव तावत्सर्वान्वेदान्सार्थानधीत्य महामना महद्गंभीरं मनो यस्येति महामनाः सर्वज्येष्ठोहमिति मन्यमानः अनूचानमनुवचनसमर्थमात्मानं मन्यत इत्यनूचानमानी स्तब्धोऽप्रणतस्वभाव एयाय स्वगृहान्प्रत्यागत इत्यर्थः । तमेवंभूतं पुत्रं दृष्ट्वा ह पिता उवाच । किं । हे श्वेतकेतो नु इति वितर्के । कस्ते उपाध्यायादतिशयः प्राप्तो यद्येनातिशयेन हे सोम्य त्वमनूचानमानी इतीदं कुलाननुरूपं यथास्यात्तथा स्तब्धोऽसि । उत अपि तमादेशमुपदेशं ब्रह्मलक्षणमप्राक्ष्यः पृष्टवानसीति ॥ २ ॥

**येनाश्रुतँ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥**

येनादेशेन श्रुतेनान्यदश्रुतमपि श्रुतं भवत्यमतं मतं भवत्यविज्ञातमनिश्चितं विज्ञातं भवतीति । एतदद्भुतं श्रुत्वा पृच्छति—कथमिति । कथं नु केन प्रकारेण हे भगवः स आदेशो भवति ॥ ३ ॥

इत्युक्तः पितानेकदृष्टान्तपुरःसरं तमुपदिशति—

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातँ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

यथेति । यथा लोके हे सोम्यैकेन मृत्पिण्डेन कारणभूतेन विज्ञातेन सर्वं मृन्मयं मृद्विकारजातं घटादि विज्ञातं स्यात्कार्यस्य कारणानन्यत्वादित्यर्थः । कथं तर्हि कार्यकारणभेदप्रसिद्धिरित्यत आह—वाचेति । वाचाऽरभ्यत इति

वाचारंभणं वागालंबनं विकार उच्यते । परंतु न परमार्थतो वस्त्वस्ति । यतो नामधेयं नामैव नामधेयं नाममात्रं नार्थोऽस्तीत्यर्थः । तर्हि किमस्तीत्यत आह—मृत्तिकेति । मृत्तिकेत्येव मृत्तिकैव तु सत्यं । वस्तुषु व्यावर्तमानेष्वनुस्यूतत्वात् ॥ ४ ॥

तथा—

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥**

तथा सोम्यैकेन लोहमणिना सुवर्णपिण्डेन सर्वं लोहमयं कटाहादि विज्ञातं स्यात्समानमन्यत् ॥ ५ ॥

तथा—

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥**

यथा सोम्यैकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेन सर्वं कार्ष्णायसं कृष्णायसो विकारजातं विज्ञातं स्यात्समानमन्यत् । एवं यथादृष्टान्तमेव हे सोम्य स मयोक्त आदेशो भवति ॥ ६ ॥

इत्युक्तः पुत्र आह—

**न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति तथा सोम्येति होवाच ॥ ७ ॥ इति प्रथमः खण्डः ॥ १ ॥**

नूनं भगवन्तो मम गुरव एतद्भवदुक्तं वस्तु नवै अवेदिषुर्नैव विज्ञातवन्तः । कुतः । हि यस्माद्यदि एतद्भवदुक्तं मद्गुरवः अवेदिष्यन्विदितवन्तस्तर्हि कथं मे गुणवते नावक्ष्यन्नोक्तवन्तः । अतो भगवांस्त्वेव भगवानेव मे मह्यं तद्वस्तु ब्रवीतु कथयत्वित्युक्तः पिता तथास्तु हे सोम्येति होवाचोक्तवानित्यर्थः ॥ ७ ॥ इत्यष्टमे प्रथमः खण्डः ॥ १ ॥

एवं प्रतिज्ञातमेकविज्ञानेन सर्वविज्ञानं वक्तुमाह—

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत ॥ १ ॥**

हे सोम्येदं नामरूपात्मकं जगदग्रे सृष्टेः प्राक्सदेव सच्छब्दवाच्याव्याकृतात्मकमीश्वरभूतमेवासीदित्यर्थः । तस्य लक्षणमाह—एकमेवाद्वितीयमिति । एतैः पदैः क्रमेण सजातीयस्वगतविजातीयभेदरहितमात्मतत्वमुक्तमित्यर्थः । उक्तजगत्कारणप्रतीतिदार्ढ्यार्थं तद्विपरीतार्थकं महावैनाशिकमतं दूषयितुमुपन्यस्यति—तदिति । तत्तत्र प्रागुत्पत्तेर्वस्तुनिरूपणविषये ह एके वैनाशिका आहुः । किं । इदं जगदग्रे प्रागुत्पत्तेरसदेव शून्यमेवासीत् । एकमेवेत्यादिपूर्ववत् । तस्मादसतः शून्यात्सत्कार्यं जायत अजायत । अडभावश्छान्दस इत्यर्थः ॥ १ ॥

इदं मतं दूषयति—

**कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

हे सोम्यैवमसतः सज्जायत इत्येवं कुतस्तु खलु प्रमाणात्स्यादिति होवाच पिता । न कुतश्चित्प्रमाणादतः कथं केन प्रकारेणासतः सज्जायेतोत्पद्येत । तत्र दृष्टान्ताभावादित्यर्थः । स्वपक्षसिद्धिमुपसंहरति—सत्त्वेव सोम्येत्याद्युक्तार्थं २

सतः अद्वितीयत्वं ततो जगदुत्पत्त्यादिप्रदर्शनेन समर्थयते—

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

तत्सदाख्यं ब्रह्म सौम्य ऐक्षतेक्षां दर्शनं कृतवान् । कथं । बहु प्रभूतं स्यां भवेयं । प्रजायेय प्रकर्षेण च जायेयमिति । ईक्षित्वा तत्स्रष्टृ ब्रह्म सृष्टिपरिपूर्तये ब्रह्मणोऽद्वितीयत्वसिध्यर्थं चाकाशवायुसर्जनपूर्वकं तेजोऽपञ्चीकृतमसृजत तत्पुनस्तेजोरूपापन्नं स्रष्टृ ब्रह्मैक्षत बहुस्यां प्रजायेयेति । तद्ब्रह्मापः

अपञ्चीकृता असृजत । एवमपां तेजःकार्यत्वे लोकानुभवमनुकूलयति—तस्मादिति । यस्मात्तेजःकार्यभूता आपस्तस्माद्यत्र क्व च यस्मिन्कस्मिंश्चिद्देशे काले वा पुरुषः शोचति वा संतप्यते स्वेदते प्रस्विद्यते तेजस एव तत्तदापोऽधिजायन्त उत्पद्यन्ते ॥ ३ ॥

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ॥ ४ ॥ इति द्वितीयः खण्डः ॥ २ ॥**

ता आपः पूर्ववदबाकारमापन्नं ब्रह्मैक्षत बह्व्यः प्रभूताः स्याम भवाम प्रजायेमह्युत्पद्येमहीति । एवमीक्षित्वा ता आपस्तदवच्छिन्नं ब्रह्मान्नं पृथिवीलक्षणमसृजत । अत्रापि लोकप्रसिद्धिं प्रमाणयति—तस्मादिति । यस्मादप्कार्यमन्नं तस्माद्यत्र क्व च देशे वर्षति तत्तत्रैव भूयिष्ठं प्रभूतमन्नं भवत्यतोऽद्भ्य एव तदन्नाद्यमन्नं च तदाद्यं चान्नाद्यं व्रीह्याद्यपि जायते । एवं पार्थिवान्नस्याद्भ्य उत्पत्तिकथनेन पृथिव्या एवाद्भ्यः प्रभवत्वं साध्यते इत्यर्थः ॥ ४ ॥ इत्यष्टमे द्वितीयः खण्डः

अथ जीवाविष्टानां भौतिकानामपि परंपरया ब्रह्मकार्यत्वं वक्तुं तान्यनुवदति—

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

येषां पूर्वाध्याये गत्यागत्यादि तृतीयस्थानं चोक्तं तेषां खल्वेषां मनुष्यपक्ष्यादिभूतानां त्रीण्येव बीजानि कारणानि भवन्ति । कानि आण्डजं अण्डाज्जातमण्डजं अण्डजमेवाण्डजं पक्ष्यादि पक्ष्यादीनां बीजं । तथा जीवाज्जातं जीवजं जरायुजं पुरुषपश्वादि पुरुषपश्वादीनां बीजं । तथा उद्भिनत्तीत्युद्भिज्जं स्थावरं स्थावराणां बीजं । स्वेदजादीनां चाण्डजादिष्वेवान्तर्भावाद्युक्तमवधारणमित्यर्थः ॥ १ ॥

एषां शरीराणां परंपरयोक्तभूतकार्यत्वं वक्तुमाह—

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥**

सा प्रकृतेयमव्यवहितोक्ता स्रष्टृदेवता अलौकिकत्वादव्याकृताख्या पूर्वव-

देक्षत । कथं । हन्तेदानीमहं चिन्मात्ररूपानेन बुद्धिस्थपूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनात्मना सद्रूपेण इमाः सृष्टास्तिस्रस्तेजोऽबन्नात्मिकाः सूत्रात्मशरीरभूताः प्रत्यक्षत्वादेवताः सूर्यप्रतिबिंबवदनुप्रविश्य संसृज्य तद्देहाभिमानवती भूत्वा नामरूपे नाम्ना रूपेण च तत्सूक्ष्मपिण्डे व्याकरवाणि असौनामायमिदंरूप इति व्याकुर्यां ॥ २ ॥

किञ्च—

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥**

तासां तिसृणां देवतानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं गुणप्रधानभावेन त्रिरूपां करवाण्येतस्मिंस्त्रिवृत्कृतेऽपि विराट्शरीरेऽनुप्रविश्य नामरूपे व्याकरवाणीत्यैक्षतेति संबन्ध इत्यर्थः । सा देवता यथासंकल्पं कार्यं कृतवतीत्याह—सेयमिति । सेयं प्रकृता देवताऽनेन जीवेनात्मनेमास्तेजआद्यास्तिस्रो देवताः प्रविश्य यथासंकल्पमेव नामरूपे व्याकरोत् ॥ ३ ॥

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥ इति तृतीयः खण्डः ॥ ३ ॥**

तासां च देवतानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतमकरोदित्युक्तार्थं । उक्तं त्रिवृत्करणमुदाहरणतः स्फुटीकर्तुमुपक्रमते—यथेति । यथा नु खलु हे सोम्येमा उक्तास्तिस्रो देवता एकैका प्रत्येकं त्रिवृत्त्रिवृद्गुणप्रधानभावेन भवति तत्त्रिवृत्करणात्तथा मे मम वचनाद्विजानीहि विस्पष्टमुदाहरणतोऽवधारयेत्यर्थः ॥ ४ ॥ इत्यष्टमे तृतीयः खण्डः ॥ ३ ॥

तद्दर्शयति—

**यदग्ने रोहित॰ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥**

यदग्नेस्त्रिवृत्कृतस्य रोहितं लोहितं रूपं तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि । तस्यैवाग्नेर्यच्छुक्लं रूपं तदपामत्रिवृत्कृतानां रूपं । तस्यैव यत्कृष्णं

रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृतायाः रूपं । एवं विवेकात्पूर्वं यत्त्वाग्मावग्नित्वबुद्धिविषयभूतमासीत्तदिदानीमग्नित्वमग्नेः सकाशादपागादपगतम् । कुतः । तस्य बुद्धिमात्रपरिकल्पितत्वादित्याह—वाचेति । विकारस्याग्न्यादेर्नामधेयं वाचारंभणं वाङ्मात्रमेव मृषैवेत्यर्थः । किं तर्हि सत्यमित्यत आह—त्रीणीति । रोहितादित्रीण्येव रूपाणि सत्यमित्यर्थः ॥ १ ॥

**यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥ यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥ यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥**

तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युतो रोहितं रूपमित्यादि समानम् ॥ २—४ ॥

**एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥ ५ ॥**

पुनस्त्रिवृत्करणमुदाहरणांतरेण दर्शयितुमाह—एतदिति । एतत्त्रिवृत्करणं ह वै विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्तकालिकाः महाशाला महागृहस्था महाश्रोत्रिया आहुः स्मोक्तवन्तः । किं । अद्येदानीं नोऽस्माकं यथोक्तज्ञानवतां कुले कश्चन कश्चिदप्यश्रुतममतमविज्ञातमित्येवं नोदाहरिष्यति न वदिष्यति सर्वस्य ज्ञातत्वादित्यर्थः । कुत इत्यत आह—ह्येभ्य इति । हि यस्मादेभ्यो रोहितादित्रिरूपेभ्य एवान्यदवशिष्टमपि सर्वं विदांचक्रुर्विदितवन्तः ॥५॥

कथं—

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्वि-दांचक्रुर्यदु शुक्लमिवाभूदित्यपाँ रूपमिति त-द्विदांचक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः ॥ ६ ॥**

यदु यदप्यनेकरूपतया संदिह्यमाने कपोतादिरूपे रोहितमिवाभूद्गृह्यमाण-मासीदिति तेजसस्तद्रूपमित्येवं विदाञ्चक्रुस्तथा यत् शुक्लमिव गृह्यमाणमभूत्त-दपां रूपम् । यत्कृष्णमिव गृह्यमाणमभूत्तदन्नस्य रूपमित्येवं विदाञ्चक्रुरित्यर्थः ६

किं बहुना यत्रापि रूपादिविशेषोऽवगन्तुं न शक्यते तत्रापि त्र्यात्मकत्व-मवधारितवन्त एवेत्याह—

**यद्विज्ञातमिवाभूदित्येतासामेव देवतानाँ स-मास इति तद्विदांचक्रुर्यथा नु खलु सोम्येमा-स्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥ इति चतुर्थः खण्डः ॥ ४ ॥**

यदु अविज्ञातमिति छेदः । यदपि द्वीपान्तरादागतं पक्ष्यादि नामरूपा-भ्यामविज्ञातमिव विशेषतोऽगृह्यमाणमभूत्तदप्येतासामेव तिसृणां देव-तानां समासः समुदाय इति विदाञ्चक्रुरित्यर्थः । एवमाधिदैविकमाधि-भौतिकं च त्रिवृत्कृतमुदाहरणेन दर्शयित्वा आध्यात्मिकमपि तत्तथा दर्शयि-तुमाह—यथेति । यथा येन प्रकारेण नु खलु हे सोम्येमास्तेजोबन्नात्मिका-स्तिस्रो देवताः पुरुषेणोपयुज्यमानाः पुरुषं शिरःपाण्यादिलक्षणं प्राप्यैकैका देवता त्रिवृत्त्रिवृद्भवति तथेदानीं तदाध्यात्मिकं त्रिवृत्करणं मे मम वचनाद्वि-जानीहीत्यर्थः ॥ ७ ॥ इत्यष्टमे चतुर्थः खण्डः ॥ ४ ॥

तद्दर्शयति—

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमः स्तन्माँसं योऽणिष्ठस्तन्मनः ॥ १ ॥**

अन्नं प्रसिद्धमशितं भुक्तं जाठराग्निना पच्यमानं त्रेधा विधीयते विभ-

श्यते । कथं । तस्यान्नस्य त्रिधाविधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलोंऽशस्तत्पुरीषं भवति । यो मध्यमोंऽशस्तद्रसादिक्रमेण परिणम्य मांसं भवति । योऽणिष्ठोऽणुतमो धातुः हृदयं प्राप्य नाडीषु प्रविश्य संघातस्य स्थितिमुत्पादयन्मनो भवति । मनसः पूर्वमेव सिद्धत्वान्मनस उपचयं करोतीति यावत् ॥ १ ॥

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

तथापः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितं भवति । योऽणिष्ठः स प्राणो भवति । वक्ष्यति ह्यापोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ २ ॥

तथा—

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

तेजो घृततैलादि । अस्थि स्पष्टं । मज्जा अस्थ्यंतर्गतः स्नेहः । अणिष्ठः सा वाक् तैलादिभक्षणे हि वाग्भाषणसमर्था । समानमन्यत् ॥ ३ ॥

उक्तमुपसंहरति—

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥**

हि यस्मादेवमन्नाद्यणिष्ठभागो मनआदिहेतुरतोन्नमयं सोम्य मनः । आपोमयः प्राणस्तेजोमयी वागिति युक्तमित्यर्थः । एवं प्रत्यायितः श्वेतकेतुराह—य इति । एकस्मिन्देशे मिश्रीभूतानामन्नादीनां कथं पृथक्पृथक् मनआदिरूपकार्यकरत्वमिति संदेहादतो भूय एव पुनरेव भगवान् त्वं मामन्नमित्यादि विज्ञापयतु दृष्टान्तेनावगमयत्वित्युक्तः पिताह—तथेति । हे सोम्य

मनआदेरन्नादिमयत्वं यथोपपद्यते तथा दृष्टान्तेनोच्यमानं शृण्विति पितोवाचेत्यर्थः ॥ ४ ॥ इत्यष्टमे पञ्चमः खण्डः ॥ ५ ॥

एवं प्रतिज्ञातमाह—

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥**

हे सोम्य मथ्यमानस्य दध्नो योऽणिमाणुभावः स ऊर्ध्वः समुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्घृतं भवति ॥ १ ॥

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥ अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥ तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥ अन्नमयꣳहि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥ इति षष्ठः खण्डः ॥ ६ ॥**

एवं यथादृष्टान्तमेव ह खलु हे सोम्यान्नस्याश्यमानस्य भुज्यमानस्य स वायुनाग्निना मथ्यमानस्य योऽणिमा स ऊर्ध्व ऊर्ध्वहृदये समुदीषति आगच्छति तन्मनो भवति । अपां सोम्येत्यादि भूय एवेत्यतः प्राक्तनं समानम् । कथं हृदयप्रदेशे प्राणादीनां सन्निधानाविशेषेऽपि मनस एवान्नरसेनोपचय इति संदेहाद्भूय एव भगवान्विज्ञापयत्वित्यादि समानम् ॥ २—५ ॥ इत्यष्टमे षष्ठः खण्डः ॥ ६ ॥

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसोपचितत्वं दर्शयितुमाह—

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो नपिबतो विच्छेत्स्यत इति ॥ १ ॥**

हे सोम्य पुरुषः प्रसिद्धः षोडशकलः षोडश कलाः उपयुक्तान्नजनिता मनःशक्त्यंशा यस्यासौ षोडशकलः तस्याः शक्तेः षोडशादिनावच्छेदेन षोड-

शधा प्रविभज्य कलावदुपचयापचयधर्मित्वेन कलात्वेन निर्दिदिक्षितत्वात्। यद्येतदत्रक्तं मानसं वीर्यं प्रत्यक्षीकर्तुमिच्छसि तर्हि पञ्चदशाहानि दिनानि माशीरशनं मा कार्षीः। अपस्तु कामं यथेच्छं पिब यतो न्पिबत उदकपानमकुर्वतस्तव प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते। कुतः। यस्मादापोमयोऽब्विकारः प्राणः॥ १॥

इत्येवं पित्रोक्तः—

**स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति॥ २॥**

स श्वेतकेतुर्ह पञ्चदशाहानि नाशाशनं न कृतवानथानन्तरं षोडशेऽहनि ह एनं पितरमुपससादोपगम्य चोवाच। किं भो भगवन्नहं ब्रवीमीत्युक्तः पिताह। ऋचो यजूंषि सामान्यधीष्वेत्युक्तः पुत्र आह—नवै मा मां भो भगवन्नृगादीनि प्रतिभांति स्फुरन्तीति॥ २॥

**तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति॥ ३॥**

एवमुक्तवन्तं तं पुत्रं प्रति ह पिता तत्र सदृष्टान्तं कारणं वक्तुमुवाच। किं। यथा लोके हे सोम्य महतो महत्परिमाणस्याहितस्योपचितस्याग्नेर्यथैकोंगारः खद्योतमात्रं खद्योतपरिमाणः परिशिष्ट उर्वरितः स्यात्तदा तेनांगारेण ततोपि खद्योतपरिमाणादपि न बहु दहेत्। एवं यथादृष्टान्तमेव हे सोम्य ते तवान्नोपचितानां षोडशानां कलानां मध्ये एका कलातिशिष्टावशिष्टा स्याद्वर्तते। तयैकया कलया एतर्हीदानीं त्वं वेदान्नानुभवसि। श्रुत्वापि न प्रतिपद्यसे। अशान भुंक्ष्व अथानन्तरं मे ममर्गादिलक्षणं वचनं विज्ञास्यसि॥ ३॥

इत्युक्तः—

**स हाशाथ हैनमुपससाद तꣳह यत्किंच पप्रच्छ सर्वꣳह प्रतिपेदे॥ ४॥**

स पुत्रो हाश भुक्तवानथानन्तरं ह एनं पितरमुपससाद। तमुपगतं पुत्रं ह पिता यत्किंचर्गादिजातं पप्रच्छ तत्सर्वं ह पुत्रः प्रतिपेदे प्रतिपन्नवान् ॥ ४ ॥

**तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैक-मङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमा-धाय प्राज्वालयेत्तेन ततोऽपि बहु दहेत् ॥ ५ ॥**

तं पुत्रं ह पिता तत्कारणमुवाच सदृष्टान्तम्। यथा सोम्य महतोऽभ्याहि-तस्याग्नेरेकमंगारं खद्योतमात्रं परिशिष्टं स्यात्तमङ्गारं तृणैरुपसमाधायोपचित्य प्राज्वालयेद्वर्धयेत्। तेन वर्द्धितेनांगारेण ततोपि पूर्वपरिमाणादपि बहु दहेत् ॥५॥

**एवꣳ सोम्य ते षोडशानां कलानामेका कला-तिशिष्टाभूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयै-तर्हि वेदाननुभवस्यन्नमयꣳहि सोम्य मन आ-पोमयः प्राणस्तेजोमयी वागिति तद्धास्य विज-ज्ञाविति विजज्ञाविति ॥ ६ ॥ इति सप्तमः खण्डः ॥७॥**

एवं यथादृष्टान्तमेव हे सोम्य ते तव षोडशानां मध्ये एका कला-तिशिष्टाभूत्सातिशिष्टा कलान्नेनोपसमाहितोपचिता प्राज्वालीत्प्रज्वलिता संव-र्द्धिता। तया वर्द्धितयैतर्हीदानीं वेदाननुभवस्युपलभसेऽतोऽन्नमयं हि सोम्य मन इत्याद्युक्तार्थं। श्वेतकेतोरुपदिष्टसंपत्तिं श्रुतिर्दर्शयति—तद्धेति। तन्मन-आदीनामन्नादिमयत्वं हास्य पितुरुक्तं श्वेतकेतुर्विजज्ञौ विज्ञातवान्। द्विरभ्या-सस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः ॥ ६ ॥ इत्यष्टमे सप्तमः खण्डः ॥ ७ ॥

त्रिवृत्करणविषयमवान्तरप्रकरणं परिसमाप्य सद्विषयमेवानुवर्तयन्मनसो लये सुषुप्तौ जीवस्य सत्संपत्तिं वक्तुमुक्तवानित्याह—

**उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥**

उद्दालको नामतोऽरुणस्यापत्यमारुणिः श्वेतकेतुं पुत्रमुवाच। किं। हे

सोम्य स्वप्नान्तं स्वप्नस्यान्तोऽवसानं यस्मिन्निति स्वप्नान्तस्तं स्वप्नान्तं सुषुप्तिस्थानं सत्संपत्त्याख्यं मे मम वचनाद्विजानीहीति । कथं । यत्र यस्मिन्काले पुरुषस्यैतत्स्वपिति नाम भवति तदा तस्मिन्काले हे सोम्य पुरुषः सता सच्छब्दवाच्यया प्रकृतया देवतया संपन्नः एकीभूतो भवति भेदहेतूपाधेर्विलयादित्यर्थः । कथमेतन्नामेत्यपेक्षायां गुणयोगादित्याह—स्वमिति । मनआदेर्विलीनत्वेन तत्संसर्गकृतजीवत्वं परित्यज्य स्वं स्वकीयं सद्रूपं परमार्थसत्यमपीतो गतो भवति । तस्मादेनं सुषुप्तं स्वपितीत्येवं नामाचक्षते लौकिकाः । स्वं स्वात्मानं हि यस्मादपीतो भवतीत्येवं तद्गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिरवगम्यते इत्यभिप्रायः ॥ १ ॥

एवमुक्तामेव सत्संपत्तिं दृष्टान्तेन बोधयति—

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥**

स दृष्टान्तो यथा लोके शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो बन्धनमोक्षार्थी सन् दिशंदिशं प्रतिदिशं पतित्वा बन्धनादन्यत्रायतनमाश्रयं विश्रामस्थानमलब्ध्वाऽप्राप्य बन्धनमेवोपश्रयते आश्रयते । एवं यथादृष्टान्तमेव खलु हे सोम्य तत्प्रत्यक्षमन्नोपचितं मनो मनउपलक्षितो जीवो दिशंदिशं कर्मोपदिष्टसुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वानुभूयान्यत्र सदाख्यात्स्वात्मन आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव सदाख्यां देवतामेवाश्रयते । न प्रसिद्धं प्राणं सत्प्रकरणात्प्राणस्य प्राणमित्यादिश्रुत्यन्तराच्चेत्यर्थः । जीवस्य परमात्माश्रितत्वे हेतुमाह—प्राणबन्धनमिति । हे सोम्य हि यस्मात्प्राणो बन्धनं यस्य मनसस्तन्मनः प्राणबन्धनं प्राणोपलक्षितपरमात्माश्रयं मनस्तदुपलक्षितो जीव इत्यर्थः ॥ २ ॥

स्वपितिनामप्रसिद्धिद्वारेण जगतो मूलं दर्शयित्वान्नाद्यादिलक्षणकार्यकारणपरंपरयापि तद्दिदर्शयिषुराह—

**अशनापिपासे मे सोम्य विजानीहीति यत्रैत-**

**त्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

अशितुमिच्छाशना । यालोपश्छान्दसः । पातुमिच्छा पिपासा । ते अशपिपासे तयोः तत्वं हे सोम्य मे मम वचनाद्विजानीहीति । उक्ता तावदना । तत्वं दर्शयति—यत्रेति । यत्र यस्मिन्काले पुरुषः अशितुमिच्छत्याशिषतीत्येतन्नाम भवति । तदा पीता आप एव तदशितमन्नं नयन्ते वीकृत्य रसादिभावेन परिणमयन्ते इत्यर्थः । एतत् दृष्टान्तेन प्रतिपादयति—दिति । तत्तस्मिन्नपामशितनेतृत्वे दृष्टान्तो यथा लोके गां नयतीति गोनायो ोपाल उच्यते । तथाऽश्वनायः पुरुषनाय इत्येवं यथादृष्टान्तं तत्तदा यदा रुषोऽशिशिषतिनामा तदाऽशितं नयतीति । अशनायेत्येकवचनं छान्दमेवमप आचक्षते कथयंति लौकिकाः । तत्रैवमपामशितनेतृत्वे सत्येतच्छराख्यं शुंगमिव शुंगं कार्यं वटकणिकानामिवांकुररूपमुत्पतितमुत्पन्नं हे ोम्य त्वं विजानीहि । किं । नेदं शरीररूपं शुङ्गं कार्यममूलं मूलरहितं ावति ॥ ३ ॥

इत्युक्तः श्वेतकेतुराह—

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

तस्य शरीरस्य क्व मूलं स्यादित्येवं पृष्टः पिताह—अन्यत्रान्नादिति । अन्नान्यत्र तस्य क्व मूलं स्यादित्यनुषङ्गः । किंत्वन्नमेव रसादिक्रमेण मूलमिति ावः । यथा देहशुंगोन्नमूल एवमेव खलु हे सोम्यान्नेनान्नरूपेण शुंगेन ार्येणापो मूलमेवंलक्षणं कारणमन्नस्य शुंगस्यान्विच्छ प्रतिपद्यस्व । तथापामप्युत्पत्त्यादिमत्त्वादद्भिः सोम्य शुंगेन कार्येण तत्कारणरूपं तेजो मूलमन्विच्छ । तथा त्वं तेजसा सोम्य शुंगेन सद्रूपं मूलमीश्वराख्यमन्विच्छ ।

अतो हे सोम्येमाः स्थावरजंगमलक्षणाः सर्वाः प्रजाः सन्मूलाः सत्कारणकाः सदायतनाः सदाश्रयाः स्थितिकाले । सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः परिसमाप्तिर्यासां ताः सत्प्रतिष्ठाश्च प्रलयकाले इत्यर्थः ॥ ४ ॥

अथाप्शुंगद्वारापि सदधिगममाह—

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

यत्र यस्मिन्काले पुरुषः पातुमिच्छति पिपासतीत्येतन्नामा भवति । तत्तदा तेज एव पीतमबादि शोषयन्नयते लोहितादिभावेन परिणमयति । तत्तत्र दृष्टान्तो यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तदा तेज उदन्येत्येवमाचष्टे । उदकं नयतीत्युदन्यं उदन्येतिच्छान्दसं । तत्रैवं तेजसाऽपां लोहितादिभावेन परिणम्यमानत्वे सत्येतदेव शरीराख्यमेव शुंगमुत्पतितमित्यादि समानम् ॥ ५ ॥

**तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥**

एवं तेजोबादिनोपयुज्यमानेनोपचितसंघाते कस्य भूतस्य किं कार्यमित्यत आह—यथेति । यथा येन प्रकारेण हे सोम्येमास्तेजोबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्यैकैका देवता त्रिवृत्त्रिवृद्भवति । तत्त्रिवृत्करणं पुरस्तादेव प्रागेवान्नमशितं त्रेधा विधीयत इत्याद्युक्तं भवतीत्यर्थः । अथ मरणद्वारापि सदात्मत्वं निरूपयति—अस्येति । हे सोम्यास्य प्रयतो म्रियमाणस्य पुरुषस्य

वाक्प्रथमं मनसि संपद्यते उपसंह्रियते। मनः प्राणे प्रसिद्धे संपद्यते। प्राणश्च तेजसि भौतिके आध्यात्मिके। यद्वा तदुपलक्षिते तदध्यक्षजीवे संपद्यते। तेजः परस्यां सदाख्यायां देवतायां संपद्यते। एवमस्यां देवतायां निमित्तस्य मनस उपसंहारात्तत्स्थजीवोपसंहारस्य सुषुप्तकालवदर्थात्प्राप्तत्वादित्यर्थः। एवं सिद्धं सदद्वयत्वमुपसंहरति—स य इति। एवं यन्मूलप्राप्तोऽज्ञानमात्रव्यवहितत्वात्पुनस्ततः सुषुप्तवदुत्थाय देहजालमाविशति जीवः॥ ६॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच॥ ७॥ इत्यष्टमः खण्डः॥ ८॥**

स य एष उक्तः सदाख्योऽणिमाऽणुभावो अणुरिव सूक्ष्म ऐतदात्म्यमेतदेव सत् आत्मा यस्य सर्वस्य तदेतदात्मं तस्य भाव ऐतदात्म्यमेतदात्मकमिदं सर्वं जगद्येन चात्मनात्मवत्तदेव सदाख्यं कारणं सत्यं परमार्थसदतः स एवात्मा सर्पवत्कल्पितस्य जगतः स्वरूपं रज्जुवदित्यर्थः। एवं सर्वस्य सदात्मत्वेऽपि मम किं स्यादित्यत आह—तत्त्वमसीति। अतः हे श्वेतकेतो त्वमपि तत्सत्सदाख्यं ब्रह्मासीत्येवं प्रत्यायितः पुत्र आह—भूय इति। यद्यहन्यहनि सर्वाः प्रजाः सुषुप्तौ सदात्मस्वरूपं प्राप्नुवन्ति तर्हि वयं सत्संपन्ना इति ताः कुतो न विदुरिति संदेहोऽस्त्यतस्तत्कारणं दृष्टान्तेन मा मां भगवान् भूय एव पुनरपि ज्ञापयतु प्रत्याययत्विति पृष्टः पिता तत्कारणं वक्तुं प्रतिज्ञातवानित्याह—तथेति। हे सोम्य तथास्तु त्वत्पृष्टं दृष्टान्तेन बोधयिष्यामीत्युवाच पिता॥ ७॥ इत्यष्टमेऽष्टमः खण्डः॥ ८॥

तथा बोधयितुमाह—

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳरसान् समवहारमेकताꣳ रसं गमयन्ति॥ १॥**

यथा लोके सोम्य मधुकृतो मधु कुर्वतीति मधुकृतो मधुकरमक्षिकाः मधु निस्तिष्ठंति निष्पादयन्ति। कथं। नानात्ययानां नानागतीनां नानादिक्कानां

वृक्षाणां रसान्समवहारं समाहृत्य समाहृत्यैकतामेकभावं मधुत्वेन रसमिति वचनव्यत्ययेन रसान् गमयन्ति मधुत्वं संपादयन्तीति यावत् ॥ १ ॥

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ २ ॥**

ते रसाः यथा तत्र मधुनि न विवेकं लभन्ते । कथं । अमुष्याम्रस्य वृक्षस्य रसोऽस्म्यहममुष्य पनसस्य वृक्षस्य वा रसोऽस्म्यहमित्येवं यथादृष्टान्तमेव खलु हे सोम्येमाः सर्वाः प्रजाः सुषुप्तौ मरणप्रलययोश्चापि सति सदाख्ये ब्रह्मणि संपद्य प्राप्य वयं सति संपद्यामहे संपन्ना भवामः संपन्ना इति वा न विदुर्न जानीयुरेकीभूतत्वादित्यर्थः ॥ २ ॥

तर्हि यथाशरीरमुत्थानं न स्यादित्यत आह—

**त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ ३ ॥**

ते जीवा इह लोके सुषुप्तौ सत्संपत्तेः प्राग्यत्कर्मवशाद्व्याघ्रो वा सिंहो वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वेत्येवमादि यद्यत्पूर्वरूपा भवन्ति प्रतिपन्ना बभूवुस्ते पुनस्तत्कर्मज्ञानवासनांकिताः संत उत्थानममये तद्व्याघ्रादिरूपमेव भवंत्यागत्य व्याघ्रो वा सिंहो वेत्येवं प्रतिपद्यन्ते । आत्मनः सदात्मत्वमज्ञात्वैव तत्संपन्नत्वादित्यर्थः ॥ ३ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ इति नवमः खण्डः ॥ ९ ॥**

**स य एषोऽणिमेत्यादि** पूर्ववत् । ननु तथापि सत आगमनानन्तरमहं सत आगतोऽस्मीति ज्ञानं कस्मात्कारणान्न भवति तत्कारणं भूय एव मा भगवान् दृष्टान्तेन विज्ञापयत्वित्यादि समानम् ॥ ४ ॥ इत्यष्टमे नवमः खण्डः

तत् सदृष्टान्तमाह—

**इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

हे सोम्येमाः प्राच्यः प्रागञ्चना गङ्गाद्या नद्यः पुरस्तात्पूर्वां दिशं प्रति स्यन्दन्ते स्रवन्ति । तथा प्रतीच्यः प्रतीचीमंचन्तीति प्रतीच्यः सिंध्वाद्या नद्यः । पश्चात्प्रतीचीं दिशं स्यन्दन्ते ता नद्यः समुद्रादम्भोनिधेर्जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः सत्यः पुनः समुद्रमेवापियन्ति समुद्रैकतां गच्छन्ति । अतः सः प्रसिद्धः समुद्रएव भवति । ता नद्यो यथा तत्र समुद्रे समुद्रात्मनैकतां गता न विदुरियं गङ्गाहमस्मीयं सिंध्वहमस्मीत्येवं तथा गता अपि न विजानंति ॥ १ ॥

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ २ ॥**

एवं यथादृष्टान्तमेव खलु हे सोम्येमाः सर्वाः प्रजाः सतः आगम्य सतो वयमागच्छामहे आगता इति वा न विदुरेकीभूतत्वादेवेत्यर्थः । त इह व्याघ्रोवेत्यादि समानम् ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ इति दशमः खण्डः ॥ १० ॥**

जलबुद्बुदफेनादीनां कारणभूतजलभावंगतानां विनाशवत्कारणसंपन्नानां जीवानां तु कथं न विनाश इत्येतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादिसमानम् ॥ ३ ॥ इत्यष्टमे दशमः खण्डः ॥ १० ॥

जीवनाशाभावं दृष्टान्तेन बोधयति—

**अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योग्रेऽभ्याहन्याज्जीवन् स्रवेत्स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥**

हे सोम्यास्य महतोऽनेकशाखादिसंयुक्तस्य वृक्षस्य यः कश्चिन्मूले परश्वादिनाऽभ्याहन्यात् घातयेत् स कृतघातमात्रेण शोषादर्शनाज्जीवन्नेव सन् रसं स्रवेत्तथा यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेदतः स एष वृक्ष इदानीं जीवेनात्मनाऽनुप्रभूतो व्याप्तः सन् पेपीयमानो मूलैरुदकादिकं पिबन्मोहमानो हर्षं प्राप्नुवंस्तिष्ठति ॥ १ ॥

**अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥**

अस्य वृक्षस्य यत् यदा एकां शाखां जीवो जहाति त्यजति शाखायां प्रसृतमात्मांशमुपसंहरत्यथ तदा सा शाखा शुष्यति जीवकर्मक्षयात् । द्वितीयां जहातीत्यादि समानं । एवं यथादृष्टान्तमेव खलु सोम्य विद्धीति पिता होवाच ॥ २ ॥

किञ्च—

**जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ इत्येकादशः खण्डः ॥ ११ ॥**

जीवापेतं जीववियुक्तं वाव किलेदं शरीरं म्रियते । कृतहान्यकृताभ्यागमप्रसंगादित्यर्थः । अम्रियमाणो जीवो यदात्मना स्थितः स य एषोऽणिमेत्यादि समानं । कथं पुनरिदं स्थूलं नामरूपात्मकं जगत्तद्विपरीतात्सत

उत्पद्यत इत्येतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥ इत्यष्टमे एकादशः खण्डः ॥ ११ ॥

सूक्ष्मस्य स्थूलकारणत्वं दृष्टान्तेन प्रतिपादयति—

**न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति ॥ १ ॥**

न्यग्रोधस्य वटस्य फलमतोऽस्मात्प्रकृतान्न्यग्रोधादाहर इत्युक्तः श्वेतकेतुस्तथा चकार स इदं फलमाहृतं हे भगव इति दर्शितवन्तं प्रत्याह भिंद्धि फलमित्युक्त इतर आह भिन्नं भगव इत्युक्ते तं पिताह किमत्र भिन्ने फले पश्यसीत्युक्त आह । अण्व्यः अणुतरा इवेमा धानाः बीजानि हे भगव इत्युक्ते पिताह । हे अंग आसां धानानां मध्ये एकां धानां भिंद्धीत्युक्त आह भिन्ना भगव इति उक्ते पिताह किमत्रास्यां भिन्नायां धानायां पश्यसीत्युक्तः पुत्र आह न किञ्चन पश्यामि भगव इति ॥ १ ॥

इत्युक्तवन्तं—

**तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति ॥ २ ॥**

तं पुत्रं पितोवाच । किं । हे सोम्य यं वै एतं वटबीजाणिमानं अणुभावं न निभालयसे न पश्यसि एतस्यैव वटबीजाणिम्नः कार्यभूतो हे सोम्यैषः प्रत्यक्षतो दृश्यमानो महान्स्थूलः शाखादिमान् न्यग्रोधो वट उत्पन्नः सन् तिष्ठति । एवं एतद्दृष्टान्तानुरूपमेव सतोऽणिम्नः स्थूलं जगदुत्तिष्ठतीति ॥ २ ॥

**श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ इति द्वादशः खण्डः ॥ १२ ॥**

श्रद्धत्स्व विश्वसिहि हे सोम्येत्यर्थः । एवं महानित्यत्रस्थ एवंशब्दो

व्यवहितेन संबध्य व्याकृतः । स य इत्यादि समानं । एतज्जगन्मूलं कस्मात्प्रत्यक्षेण नोपलभ्यते तदृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥ इत्यष्टमे द्वादशः खण्डः ॥ १२ ॥

तथा बोधयितुमाह—

**लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳहोवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥**

लवणमेतत् घटाद्युदकेऽवधाय प्रक्षिप्याथ रात्रेरत्ययानन्तरं प्रातःकाले मा मामुपसीदथा उपगच्छेथा इत्युक्तः स ह श्वेतुकेतुस्तथा चकार यथा पित्रोपदिष्टं तथा कृतवान् । तं श्वेतकेतुं परेद्युः प्रातर्ह पितोवाच किं यद्दोषा रात्रौ लवणमुदकेऽवाधाः निक्षिप्तवानसि हे अङ्ग तल्लवणमाहरेत्युक्तः पुत्रस्तल्लवणं ह किल दर्शनस्पर्शनाभ्यामवमृश्यान्विष्य यथापूर्वं पिण्डरूपमभूत्तथा न विवेद न विज्ञातवान् ॥ १ ॥

कुतः—

**यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचमेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यैनदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्संवर्तते तꣳहोवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥ स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

यतस्तल्लवणं विलीनमेवाप्सु संश्लिष्टमेवेत्यर्थः । तदुपलब्ध्युपायमाह—अङ्गेति । अङ्ग हे वत्सास्योदकस्यान्तादुपरिभागाद्गृहीत्वाचामाचमनं कुर्वित्युक्ते तथाकृतवन्तं पुत्रं पितोवाच । कथमित्युक्तः पुत्र आह लवणं स्वादुत

निर्देशस्तु सकारस्य सद्ब्रह्मामृतवाचकत्वेनामृतत्वसाधनार्थः । अथ यत्ति तकाराक्षरस्तन्मर्त्यमथ यद्यं यकाराक्षरं तेन यकाराक्षरेणोभे पूर्वे अमृतमर्त्याख्ये अक्षरे यच्छत्युपासको नियमयति वशीकरोति । कुतः ; यद्यस्मादनेन यकारेणोभे सकारतकाराख्ये अक्षरे यच्छति तस्माद्यमित्यर्थः । उपासनाफलमाह–अहरहरिति । एवं ब्रह्मनामनिर्वचनेन नामवतो वेत्ता एवंवित् । शेषमुक्तार्थम् ॥ ५ ॥ इति दशमे तृतीयः खण्डः ॥ ३ ॥

उक्तसंप्रसादस्वरूपभूतं ब्रह्म पुनर्गुणैर्ब्रह्मचर्यसाधनसंबंधार्थं स्तौति—

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैत॰ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृत॰ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः॥१॥**

अथशब्दः प्रकारान्तरेण स्तुतिप्रारंभार्थः । य उक्तलक्षण आत्मा स सेतुरिव सेतुस्तद्वद्विधृतिर्विधारणः सर्वस्य जन्तोर्वर्णाश्रमादिभेदवतो विधारकः। किमर्थं एषां भूरादिलोकानामसंभेदायाऽविदारणायाविनाशायेत्यर्थः । सेतुस्वरूपमाह–नैतमिति । एतं सेतुमात्मानमहोरात्रे न तरतः परिच्छेदकरणेन नातिक्रामतो न प्राप्नुवतोऽत एव न जरा न मृत्युर्न शोको न सुकृतं धर्मो न दुष्कृतमधर्मस्तरतीति प्रत्येकं संबध्यते । किं बहुना । सर्वे अहोरात्राद्या उक्ता अनुक्ताश्च पाप्मानः अतः सदाख्यादात्मनो निवर्तन्ते तमप्राप्यैवेत्यर्थः । अत्र हेतुमाह–अपहतपाप्माहीति । हि यस्मादेष ब्रह्मैव लोको ब्रह्मलोकोऽपहतो गतः पाप्मा धर्माधर्मौ यस्मादित्यपहतपाप्मेत्यर्थः ॥ १ ॥

यथोक्तसेतुप्राप्तौ फलमाह—

**तस्माद्वा एत॰ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एत॰ सेतुं तीर्त्वापि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥**

यस्मादांध्यादि शरीरवत एव तस्मात्सेतुप्राप्तेः पूर्वं शरीरसंबन्धादन्धोऽपि सन्वै एतं सेतुं तीर्त्वा प्राप्यानन्धोभवति । तथा पूर्वं विद्धो दुःखादिसंबन्धी

सन् देहवियोगात्सेतुं प्राप्याविद्धो भवति । तथैव पूर्वमुपतापी रोगाद्युपतापवान्सन्ननुपतापी भवति । किञ्च । यस्माद्ब्रह्मण्यहोरात्रे न स्तस्तस्माद्वै एतं सेतुं तीर्त्वा प्राप्य नक्तं तमोरूपमहरेवात्मज्योतिरेवाभिनिष्पद्यते संपद्यते । अत्र हेतुमाह—सकृदिति । हि यस्मादेष ब्रह्मैव लोकः सकृत्सदा विभातः स्वेनरूपेण भासमानोऽवतिष्ठत इत्यर्थः ॥ २ ॥

एतत्फलं विद्याबलेन केषां सिध्यतीत्यपेक्षायामाह—

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ इति चतुर्थः खण्डः ॥ ४ ॥**

तत्तत्रैवं सति ये एवैतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेनोपदेशादनुविन्दन्ति स्वसंवेद्यतामापादयन्ति तेषामेवैष ब्रह्मलोको नान्येषामित्यर्थः । उक्तफलमुपसंहरति—तेषामिति । तेषां ब्रह्मचर्यवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ॥३॥ इति दशमे चतुर्थः खण्डः ॥ ४ ॥

ब्रह्मचर्यं विदधती यज्ञादिभिस्तत्स्तौति—

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्टात्मानमनुविन्दते ॥१॥**

ब्रह्मचर्यस्योक्तरीत्या विधित्सितत्वे तदीयस्तुतिप्रारंभार्थोऽथशब्दः । यद्यज्ञः पुरुषार्थसाधनमाचक्षते कथयन्ति तद्विदस्तद्ब्रह्मचर्यमेव । कुतः यज्ञो ब्रह्मचर्यफलेन्तर्भवतीत्यपेक्षायां यज्ञफलस्य ब्रह्मचर्यवतो लाभादित्याह—ब्रह्मचर्येण हीति । हि यस्माद्यो ज्ञाता ब्रह्मचर्येणैवात्मनो ज्ञानात्तमात्मभूतं ब्रह्मलोकं विन्दते । तथाऽथ यदिष्टमीश्वराराधनमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः । ब्रह्मचर्येणैव हि यस्मादीश्वरमिष्ट्वा पूजयित्वा आत्मविषयामेषणां वा कृत्वात्मानमनुविन्दते ॥ १ ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥**

अथ यत्सत्रायणं बहुयजमानकं कर्माचक्षते ब्रह्मचर्यमेव तत् । कुतः । एष ह्यात्मानं रक्षयति । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवात्मानमुपदेशादनुविद्य मनुते मननं ध्यानं करोति ॥ २ ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥**

अथ यदनाशकायनमुपवासपरायणत्वमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः । एष ह्यात्मा न नश्यति यमात्मानं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमरण्यावास इत्याचक्षते ब्रह्मचर्यमेव तत् । अत्र वक्ष्यमाणयोररण्ययोरयनादिति हेतूक्तिमभिप्रेत्य ब्रह्मचर्यसहकृतविद्यासाध्यफलमाह—अरश्चेति । इतोऽस्माल्लोकादारभ्य तृतीयस्यां तृतीयत्वेन व्यवस्थितायां दिवि द्युलोकाख्ये ब्रह्मलोके अरश्च ण्यश्च ह वै प्रसिद्धौ अर्णवौ समुद्रौ वर्तेते तत्तत्र ब्रह्मलोके ऐरं इरान्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरं मदीयं तदुपयोगिनां मदकरं दर्पोत्पादकं सरोऽस्ति तत्तत्र ब्रह्मलोके अश्वत्थो वृक्षः सोमममृतं स्रवतीति सोमसवनो नामतो वा तत्रैषा परैर्ब्रह्मचर्यवद्भ्योऽन्यैर्न जीयते इत्यपराजिता नाम पूः पुरी हिरण्यगर्भस्य वर्तते । तत्रैव च प्रभुणा ब्रह्मणा विमितं निर्मितं हिरण्मयं सौवर्णमयं मण्डपमिति शेषः ॥ ३ ॥

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥**

तत्तत्रैव चैतावर्णवौ यौ अरं च ण्यं चेत्यरण्याख्यावुक्तौ तौ ये ब्रह्मचर्येणानुविन्दन्ति तेषामेव एष व्याख्यातो ब्रह्मलोकस्तेषामेव च सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ॥ ४ ॥ इति दशमे पञ्चमः खण्डः ॥ ५ ॥

अथ ब्रह्मचर्यादिसाधनसंपन्नस्य यथोक्तहृदयब्रह्मोपासकस्य मूर्द्धन्या नाड्या गतिं वक्तुमाह—

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणि-
म्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्ये-
त्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील
एष पीत एष लोहितः ॥ १ ॥**

अधिकारिणः सफलोपास्तिविधानानन्तर्यमथशब्दार्थः । या एताः वक्ष्यमाणा हृदयस्य हृदयपुण्डरीकाकारस्य संबन्धिन्यो नाड्यस्ताः पिङ्गलस्येति षष्ठ्यत्र तृतीयार्थे । वर्णतः पिङ्गलेनाणिम्ना सूक्ष्मान्नरसेनार्थात्पूर्णास्तिष्ठन्ति तदाकारा वर्तन्ते । तथा शुक्लस्य शुक्लेन नीलस्य नीलेन पीतस्य पीतेन लोहितस्य लोहितेनाणिम्ना रसेन पूर्णास्तिष्ठन्तीति प्रत्येकं संबन्धद्योतनार्थ इतिशब्दः । नाडीगतरसानामेतादृग्वर्णवैचित्र्यं तु तादृगादित्यतेजःसंबन्धादिति वक्तुं तावदादित्यस्य तादृग्वर्णवत्त्वमाह—असौ वा आदित्यः पिङ्गल इत्यादिना । एतच्छास्त्रादादित्यस्यैतद्वर्णवत्त्वमभ्युपेयमित्यर्थः ॥ १ ॥

अस्य नाडीसंबन्धं दृष्टान्तेनाह—

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं
चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ
गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता
आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते
तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

तत्तत्र दृष्टान्तो लोके महान्विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छति । उभौ कौ । इमं च सन्निहितममुं च विप्रकृष्टमित्युभौ । एवं यथादृष्टान्तमेवैताः प्रसिद्धा आदित्यरश्मय इमं पुरुषममुं चादित्यमुभौ उभयत्र गच्छन्ति प्रविष्टा इत्यर्थः । एतदेव प्रकटयति—अमुष्मादिति । या रश्मयोऽमुष्मादादित्यमण्डलात्प्रतायन्ते संतता भवन्ति ताः रश्मय आसु यथोक्तास्वध्यात्मनाडीषु सृप्ताः गताः प्रविष्टाः । ये चाभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः संतानभूतास्ते रश्मयोऽमुष्मिन्नादित्ये सृप्ता गता इत्यर्थः ॥ २ ॥

उक्तरूपाणां नाडीनां विज्ञानमयस्य स्वापाधिकरणत्वेन स्तुत्यर्थं स्वापमाह—

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तन्न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति ॥ ३ ॥**

तत्तत्रैवं सति यत्र यस्मिन्काले एतत्स्वप्नं यथास्यात्तथा सुप्तः समस्तः सामस्त्येनोपसंहृतसर्वकरणवृत्तिरतः संप्रसन्नः सम्यक्प्रसन्नोऽत एव स्वप्नं स्वप्नप्रत्ययं न विजानाति नानुभवति तदासौ जीवो यथोक्तासु नाडीषु सृप्तः प्रविष्टः नाडीद्वारा पूर्वोक्तं हृदयाकाशं सदाख्यं प्राप्तो भवतीति यावत्। तं सता संपन्नं कश्चन कश्चिदपि पाप्मा धर्माधर्मरूपः न स्पृशति। कुतः। हि यस्मात्तदा सुषुप्तौ तेजसा नाड्यन्तर्गतेन सौरेण परमात्माख्येन वा संपन्नः सर्वतो व्याप्तो भवति ॥ ३ ॥

एवं स्तुतनाडीद्वारा गमनं वक्तुं मरणकालं प्रसंजयति—

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥**

नाडीभिरूर्द्ध्वगमनप्रदर्शनार्थोऽथशब्दः। यत्र यस्मिन्काले अबलिमानमबलभावं देहस्य जरादिनिमित्तं कृशीभावमेतन्नयनं यथा स्यात्तथा नीतः प्रापितो भवति। तं मुमूर्षुमभितः सर्वतो वेष्टयित्वा आसीना उपविष्टाः ज्ञातय आहुः। किं जानासि मां पुत्रं जानासि पितरमिति च। स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावज्जानाति ॥ ४ ॥

**अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वामीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥**

अथ प्रारब्धक्षयानन्तरं यत्र यस्मिन् काले एतदुत्क्रमणं यथा स्यात्तथाऽस्माच्छरीरादुत्क्रामत्यथ तदैतैरेव नाडीषु प्रसृतादित्यरश्मिभिरेवोर्ध्वमाक्रमते स यथोक्तदहरविज्ञानसंपन्न आत्मानमोमित्योंकारेण मरणकालेपि ध्यायन्

वा ह एव उत् ऊर्द्ध्वं वा मीयते गच्छति । अविद्वांस्तु तिर्यग्गच्छतीत्यभिप्रायो वाशब्दादवगम्यते । स उत्क्रमिष्यन्विद्वान् यावद्यावता कालेन मनःक्षिपेन्मनसः क्षेपः स्यात्तावता कालेन क्षिप्रमेव गच्छति प्राप्नोति । किमर्थमित्यत आह—एतदिति । एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारमतो विदुषां प्रपदनं प्रपद्यते ब्रह्मलोकमनेनादित्यलक्षणद्वारेणेति प्रपदनं ब्रह्मलोकप्राप्तिसाधनमविदुषां त्वस्मादादित्यान्निरोधो निरोधनमादित्यप्राप्तिरपि न भवतीत्यर्थः ५

**तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥ इति षष्ठः खण्डः ॥ ६ ॥**

उक्तनाडीविभागे मन्त्रं संवादयति—तदिति । तत्तत्रोक्तेऽर्थे एष श्लोको भवति । हृदयस्य नाड्यः शतं चैका चैकोत्तरशतं प्रधानभूताः । तासां नाडीनां मध्ये एका नाडी मूर्द्धानमभिलक्ष्य निःसृता निर्गता । तया नाड्योर्द्ध्वमायन् गच्छन्नमृतत्वममृतत्वभावमेति प्राप्नोति । विष्वङ् नानागतयोऽन्या नाड्यः उत्क्रमणे उत्क्रांत्यर्थं संसारप्राप्त्यर्थमेव भवन्ति । द्विरभ्यासो नाडीप्रकरणस्य दहरविद्याप्रकरणस्य वा समाप्त्यर्थः ॥ ६ ॥ इति दशमे षष्ठः खण्डः ॥ ६ ॥

अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्येत्याद्युक्तः संप्रसादः कः केन वा साधनेन तस्य परमात्माधिगमः । अधिगम्यमानश्च परमात्मा किंरूपः । कथं वा तस्य चागम इत्येतान्प्रश्नान्निर्णेतुं तावत्प्रजापतिवाक्यमनुवदति—

**य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा५श्च लोकानाप्नोति सर्वा५श्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥**

अपहतपाप्मादिविशेषणकहृदयस्थो ब्रह्मचर्याद्युपलब्धिसाधनक उक्तः स आत्माऽन्वेष्टव्य उपदेशतोऽन्विष्य स विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । तत्फलमाह—सर्वांश्च लोकानित्युक्तार्थं ॥ १ ॥

विद्याया ग्रहणविधिप्रदर्शनार्थं स्तुत्यर्थं चाख्यायिकामारचयति—

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा१ँश्च लोकानाप्नोति सर्वा१ँश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥**

तदेतदुक्तं प्रजापतेर्वचनं ह किलोभये देवा असुरा अनु परंपरया स्वकर्णगोचरापन्नं बुबुधिरे अनुबुद्धवन्तः । ते देवा असुरा ह अन्योन्यं परिषदि ऊचुः । किं । हन्त यद्यनुमतिर्भवतां भवेत्तर्हि प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च कामानाप्नोतीत्युक्त्वेन्द्रो ह देवानां राजैवं विरोचनश्चासुराणां राजापि सन् प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवान् । कथं । तौ हेन्द्रविरोचनौ असंविदानौ संविदानं मैत्रीमकुर्वाणावेव समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशं समीपमाजग्मतुरागतवन्तौ ॥ २ ॥

**तौ ह द्वात्रि१ँशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा१ँश्च लोकानाप्नोति सर्वा१ँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥**

तौ हेन्द्रविरोचनौ गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ । तावागताविन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच—किमिच्छन्तौ किंप्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तावित्येवमुक्ताविन्द्रविरोचनौ होचतुः । किं । य अपहतपाप्मेत्यादिभगवतो वचो वचनं वेदयन्ते शिष्टा अतस्तमेवंभूतमात्मानं ज्ञातुमिच्छन्ताववास्वेति वक्तव्ये अवास्तमिति प्रजापतिवचनानुकर्षणमात्रम् ॥ ३ ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वेतेषु परिख्यायत इति होवाच ॥ ४ ॥ इति सप्तमः खण्डः ७**

तावेवमुक्तवन्ताविन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच । किं । य एषोऽक्षिणि पुरुषो द्रष्टा योगिभिः दृश्यते एष आत्माऽपहतपाप्मादिगुणत्वेनोक्त एतदात्मतत्वममृतं भूमाख्यमत एवाभयमत एव ब्रह्मेत्येवमुक्तौ प्रजापतिना अथशब्दः प्रश्नार्थः । हे भगवो योऽयमप्सु परिख्यायते परि समन्तात् ज्ञायते यश्चायमादर्शे आत्मनः प्रतिबिंबाकारः परिख्यायते खड्गादौ च एष एषां मध्ये भगवतोक्तः आत्मा कतमः किमन्यतरः किं वा सर्वेष्वेक एवेति पृष्टः प्रजापतिर्यश्चक्षुषि द्रष्टा दृश्यते इत्युक्त एष स्वहृदयस्थः उ एवात्मा सर्वेषु यथोक्तेष्वबादिषु सर्वेष्वन्तेषु मध्येषु परिख्यायते दृश्यत इति ह प्रजापतिरुवाचेत्यर्थः ॥ ४ ॥ इति दशमे सप्तमः खण्डः ॥ ७ ॥

अथ प्रजापतिस्तयोर्विपरीतग्रहणनिवृत्त्युपायमुपदिशति—

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥ १ ॥**

उदशरावे उदकपूर्णे शरावे उदकपूर्णशरावादौ आत्मानमवेक्ष्य यत्तत्रात्मानं पश्यन्तौ न विजानीथो युवां तन्मे मम प्रब्रूत मां चक्षीयाथामिति उक्तौ तौ ह तथैवोदशरावेऽवेक्षां चक्राते अवेक्षणं चक्रतुः । तथाकृतवन्तौ तौ ह प्रजापतिरुवाच । किं पश्यथ । इत्येवं प्रजापतिना पृष्टौ ताविन्द्रविरोचनौ होचतुः । किं । हे भगवो यथा आवां नखलोमादिमन्तौ स्तस्तथैवावामालोमभ्यो लोमाभिव्याप्य तथा आनखेभ्य इदं प्रतिरूपं प्रतिबिंबभूतं सर्वमेवात्मानं पश्यावः ॥ १ ॥

इत्युक्तवन्तावनिवृत्तविपरीतग्रहणौ—

**तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥**

तौ प्रजापतिस्तन्निवृत्त्यर्थं पुनरप्युवाच । किं । युवां साध्वलंकृतौ साधु सुष्ठुनालंकारेण तौ सुवसनौ सुष्ठुवस्त्रपरिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरवेक्षेथामित्युक्तौ तथैव कृतवन्तावित्याह । तौ ह साध्वलंकृतावित्युक्तार्थेन तथाकृतवन्तौ तौ ह प्रजापतिरित्येवमुक्तार्थः पूर्ववत् ॥ २ ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥**

तौ होचतुः । किं । हे भगवः आवां साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व इतीदमुदाहरणं यथा एवमेवेमौ प्रतिबिंबौ साध्वलंकृतौ सुवसनौ परिष्कृतावित्येवं विपरीतमेवोक्तवन्तौ । प्रजापतिस्तु स्वाभिप्रेतमेवात्मानं एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्येवं विपरीतग्रहणनिवृत्त्यर्थमुक्तवानपि केनचिद्दोषेण प्रतिबद्धौ तौ ह इन्द्रविरोचनौ क्रमेण छायातद्धेतुशरीरयोः क्रमेणात्मत्वं गृहीत्वा शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी प्रवव्रजतुर्जग्मतुः ॥ ३ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥**

तौ हेन्द्रविरोचनौ दूरं गच्छन्तावन्वीक्ष्यापहतपाप्मादिवचनवदेतदप्यनयोः श्रवणगोचरमेष्यतीति मत्वा प्रजापतिरुवाच । किं । अनुपलभ्य यथोक्तमात्मानं शास्त्राचार्याभ्यामज्ञात्वाननुविद्य स्वप्रत्यक्षतां चाकृत्वा विपरीतनिश्चयौ भूत्वा एताविन्द्रविरोचनौ व्रजतः गच्छेयातामतो यतरे ये केचन देवा असुरा वा एतदुपनिषद आभ्यां या गृहीतात्मविद्या छायातदाश्रयदेहविषया सेयमुपनिषद्येषां देवानामसुराणां वा ते एतदुपनिषद एवंविज्ञानाएतन्निश्चया भविष्यन्ति ते पराभूता भविष्यन्तीत्युक्तं प्रजापतिवाक्यं श्रुत्वा स्वगृहं गच्छन् योऽसुरराजः स ह शान्तहृदय एव संन् विरोचनोऽसुरान् जगाम । गत्वा च तेभ्योऽसुरेभ्य एतां शरीरात्मबुद्धिरूपामुपनिषदं प्रोवाच देहमात्रएवात्मा पित्रोक्त इत्युक्तवानतो भवद्भिरपि प्रजापतिनोक्त आत्मैव देहएवैहलोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयः सेवनीय एवमात्मानं देहमेवेहलोके महयन्नात्मानमेव परिचरंश्चोभौ लोकाववाप्नोति । कौ इमं च लोकममुं च परलोकमित्युभावित्यर्थः ॥ ४ ॥

यस्मादेवमसुरसंप्रदायोऽद्याप्यनुवर्तते—

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाᳪं ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सᳪंस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ इत्यष्टमः खण्डः ८**

तस्माद्देहात्मवादस्याप्यासुरत्वादद्यापीहलोके अददानं यथाविभागमन्नादेरदानशीलं अश्रद्दधानं सत्कार्येषु श्रद्धारहितमयजमानं अयजमानस्वभावं आसुरः खल्वयं बतेति खिद्यमानाः शिष्टाः आहुः । कुतः । हि यस्मादसुराणामेषाऽश्रद्दधानादिलक्षणोपनिषद्विज्ञानमित्यर्थः । प्रकृतोपनिषत्कार्यमाह—प्रेतस्येति । एतदुपनिषदा संस्कृताः प्रेतस्य मृतस्य शरीरं कुणपं भिक्षया गन्धमाल्यादिलक्षणया वसनेन वस्त्राच्छादनेनालंकारेण ध्वजादिना संस्कुर्वन्त्यनेन कुणपसंस्कारेणामुं परलोकं जेष्यन्तो वयमिति मन्यंत इत्यर्थः ॥ ५ ॥ इति दशमेऽष्टमः खण्डः ॥ ८ ॥

एवं स ह शान्तहृदय इत्यनेन विरोचनगतं विशेषं दर्शयित्वेन्द्रगतविशेषमाह—

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव**

**खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

अथशब्द इन्द्रगतविशेषकथनार्थः। इन्द्रो ह दैव्या संपदा युक्तत्वात्प्रजापतिवचनं पुनःपुनः स्मरन्नेवागच्छत्। देवानप्राप्यैवैतद्वक्ष्यमाणं छायात्मनि स्वात्मग्रहणनिमित्तं भयं दोषं ददर्श। तदेव प्रकटयति—यथैवेति। यथैव खल्वस्मिञ्छरीरे साध्वलंकारेणालंकृतेऽयं छायात्मापि साध्वलंकृतो भवति सुवसने सुष्ठुवसनयुक्ते सुवसनः परिष्कृते नखलोमादिच्छिन्ने च परिष्कृतो नखलोमादिरहितो भवत्येवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदस्मिञ्छरीरे अन्धे सति छायात्माप्यन्धो भवति। तथा स्रामे एकनेत्रे देहे सति छायात्मा स्रामः। चक्षुषा नासिकया वा स्रवतीति वा स्रामः। परिवृक्णे छिन्नहस्ताद्यवयवे देहे छायात्मापि परिवृक्णो भवति। किञ्च। अस्यैव देहस्य नाशमनु एष छायात्मा नश्यति ॥ १ ॥

अतः—

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति २**

नाहमत्रास्मिञ्छायात्मदर्शने भोग्यं फलं पश्यामीत्येवं छायादर्शने दोषमध्यवस्य स इन्द्रः समित्पाणिः समिद्भारहस्तो ब्रह्मचर्यं वस्तुं पुनरेयायागतवान्। तमागतमिन्द्रं प्रजापतिरुवाच। किं। हे मघवन् यद्यदि त्वं शान्त-

हृदयो विरोचनेन सार्धं प्राव्राजीः गतवानसि तर्हि किमिच्छन् पुनरागमः वागमनमित्युक्तः स इन्द्रो होवाचेत्यादि पश्यामीत्यन्तमुक्तार्थम् ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ इति नवमः खण्डः ॥ ९ ॥**

एवमेव यथा त्वयैष छायात्मा विनाशित्वादिधर्मत्वेनोक्तस्तत्तथैव इन् मघवन्निति होवाच । एतं त्वेव यत्पूर्वं मयाऽक्ष्यादौ द्रष्टृत्वेनोक्तस्तमेवात्वा भूयः पुनरप्यनुव्याख्यास्यामीत्यतस्त्वं वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मा दोषक्षपणायेत्युक्तः स इन्द्रोऽपराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै एवमुषितवते प्रतिज्ञातमात्मानमुवाचेत्यर्थः ॥ २ ॥ इति दशमे नवमः खण्डः ॥ ९ ॥

कथं—

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज सहाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदं शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥**

य उक्तलक्षण एष स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति स्वप्नभोगाननुभवत्येष आत्मेत्याद्युक्तार्थः । एवमुक्तः स हेन्द्रः शान्तहृदयः प्रवव्राजेत्याद्युक्तार्थं । कथं भयदर्शनं वृत्तमित्यत आह—तद्यद्यपीति । तद्यदिदं शरीरं यद्यप्यन्धं भवति तथाप्ययं स्वप्नात्माप्यनन्धो भवति । तथा यदीदं शरीरं स्राममेकनेत्रविकलं भवति तथापि सोऽस्रामश्च भवति । न वै नैव एष स्वप्नात्मास्य देहस्य दोषेण दुष्यति ॥ १ ॥

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

नाप्यस्य शरीरस्य वधेन स हन्यते । नास्य शरीरस्य स्राम्येण चक्षुरादिगतस्रवत्वेनायं छायात्मवत्स्रामो भवति । तथापित्वेनं स्वप्नदृशं केचन घ्नन्त्ये-

वेत्त्येवकार इवार्थस्तथा विच्छादयन्तीव। हस्त्यादयो विद्रावयन्तीव। तथाऽप्रियं पुत्रादिमरणनिमित्तं वेत्तेव। विज्ञातेव भवत्यपि च रोदितीवातो नाहमत्र स्वप्नात्मज्ञानेऽपि भोग्यं पश्यामीति ॥ २ ॥

**समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिꣳशतं वर्षाणीति स हाऽपराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥ इति दशमः खण्डः ॥ १० ॥**

एवं विचार्य स इन्द्रः समित्पाणिरित्याद्युक्तार्थं। एवं द्विरुक्तस्यापि यथावदग्रहणादद्यापि दोषवत्त्वं तस्य मत्वा प्रजापतिः पुनरपि तत्क्षपणायाह—वसापराणीत्युक्तार्थम् ॥ ३ ॥ ४ ॥ इति दशमे दशमः खण्डः ॥ १० ॥

**तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

योऽक्षिणि द्रष्टा स्वप्ने च महीयमानश्चरति तद्यत्रैतत्सुप्त इत्याद्युक्तार्थम् ॥ १ ॥

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छ-**

न्पुनरागम इति स होवाच नाह खल्वयं भगव एव संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवं प्रजापतिनाऽऽगमनप्रयोजनं पृष्टः सुषुप्तेऽपि दोषं दृष्टवानित्याह—सहेति। स इन्द्रो होवाच । किं । नाह नैव खल्वयं सुषुप्तस्थोऽप्यात्मैव जाग्रदाद्यवस्थात्मवत्संप्रतीदानीमयमहमस्मीत्यात्मानं जानाति नो एव नैवेमानि प्रसिद्धानि भूतानि च जानाति। अतोऽयं सुषुप्तः आत्मा विनाशमेवापीतोऽपि गतो भवति विनष्ट इव भवत्यतो नाहमत्र सुषुप्तेऽपि भोग्यं पश्यामीत्यादि समानम् ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्च वर्षाणीति सहापराणि पञ्च वर्षाण्युवास तान्येकशतं संपेदुरेतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥ इत्येकादशः खण्डः ॥ ११ ॥

ब्रह्मचर्यवर्षाण्येकीकृत्याह—तानीति । तानीन्द्रब्रह्मचर्यवर्षाण्येकशतमेकाधिकं शतं संपेदुः संपन्नानि । अस्याः संख्यायाः श्रुतिः स्वमुखेनैतिह्यत्वं विद्यास्तुत्यर्थमाह—एतदिति । यदेवं वृत्तं तदेतदाहुः शिष्टाः । किं । एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास । तस्मै मृदितकषायायेन्द्राय स्थानत्रयदोषसंबन्धरहितमात्मस्वरूपमपहतपाप्मादिलक्षणमुवाचातो महदेतत् ज्ञानमित्यर्थः ॥ ६ ॥ इति दशमे एकादशः खण्डः ॥ ११ ॥

कार्यकारणशरीरपरिवेष्टितौ विश्वतैजसावुक्तौ । कारणमात्रप्रतिबद्धश्च प्राज्ञो व्याख्यातः । संप्रत्यशरीरं तुरीयमुपदेष्टुं सशरीर एव विशेषज्ञानवान्भवत्यशरीरस्य तु तदभावात्तत्र विनाशभ्रमो न तु विनश्यतीत्यभिप्रेत्य शरीरं निन्दति—

मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः

**प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

हे मघवन्निदं दृश्यमानं वै प्रसिद्धं शरीरं मर्त्यं विनाशि सन्मृत्युना आत्तं व्याप्तं ग्रस्तमित्युक्ते त्रासेन वैराग्यं भवतीत्येतदर्थं पुनरुक्तं । तच्छरीरमस्य संप्रसादस्यामृतस्य मरणादिदेहेन्द्रियादिधर्मवर्जितस्याशरीरस्य । तन्न वाय्वादिवन्मूर्तत्वादि युक्तमस्यात्मनः । आत्मनोऽधिष्ठानं भोगस्येति शेषः । यद्वा जीवरूपेण प्रविश्य सदैवाधितिष्ठत्यस्मिञ्छरीरे इत्यधिष्ठानं । एवं शरीरं विद्यते यस्य स्वभावतोऽशरीरस्यापि सोस्य सशरीरः सन् प्रियाप्रियाभ्यां सुखदुःखाभ्यामात्तो व्याप्तो वै प्रसिद्धं । तामेवोपपादयति—न वै इति । न वै सशरीरस्य सतोऽविवेकात्प्रियाप्रिययोः संततिरूपयोरपहतिर्विनाश उच्छेदोऽस्ति । एवमज्ञस्य देहसंबन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्यावतो देहसंबन्धनिवृत्तिद्वारेण मुक्तिं दर्शयति—अशरीरमिति । अशरीरं निवर्तितसशरीरभ्रमं वाव संतं नैव प्रियाप्रिये स्पृशतः ॥ १ ॥

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥**

न विद्यते पाण्यादिमच्छरीरं यस्येत्यशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरित्येतान्यशरीराणि । तत्रैवं वाय्वादीनामशरीरत्वे सति यथैतानि वाय्वादीनि भूतानि पूर्वमाकाशैकतां गतानि संति पश्चादमुष्माद्भौतिकादाकाशात्समुत्थाय परं प्रकृष्टं ग्रैष्मं सावित्रं ज्योतिरुपसंपद्य प्राप्यास्तमितभावं हित्वा स्वेन स्वेन रूपेण पुरोवातपर्वतज्योतिर्लतागर्जितादिलक्षणेन वाय्वादयः क्रमेणाभिनिष्पद्यन्ते अभिनिष्पत्तिमापद्यन्ते ॥ २ ॥

**एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥**

एवं यथादृष्टान्तमेव एष संप्रसादो जीवोऽविद्यावस्थायां शरीरसाम्यमापन्नः केनचिदाचार्येण नासि त्वं देहादिधर्मा किन्तु तत्त्वमसीत्येवं प्रतिबोधितः सन्नस्माच्छरीरात्समुत्थाय देहात्मभावनां हित्वा परं परमात्मलक्षणं ज्योतिरुपसंपद्य स्वेनात्मीयेन रूपेणाभिनिष्पद्यते इत्युक्तार्थं । अभिनिष्पद्यमानस्य स्वरूपमाह—उत्तमपुरुष इति । स एवमभिनिष्पन्नः संप्रसादः उत्तमश्चासौ पुरुषश्चोत्तमपुरुषः जाग्रत्स्वप्नसुषुप्ताद्यपेक्षयेत्यर्थः । आत्मज्ञानस्तुतये विदुषः समाचारमाह—स तत्रेति । स संप्रसादः सर्वात्मभूतस्तत्र स्वात्मनि पर्येति पर्यटति । किं कुर्वन् । क्वचिदिन्द्राद्यात्मना जक्षत् विषयान् भक्षयन् हसित्वा क्वचिद्ब्रह्मलोके मानसैः पित्रादिभिः क्रीडन् तथा मानसैरेव स्त्र्यादिभिर्वा यानैर्वा रथादिभिर्ज्ञातिभिर्वा रममाण उपजनं स्त्रीपुंसयोरन्योन्यसमागमाज्जातमुपजनमिदं स्थूलशरीरं न स्मरन् तत्स्मरणस्य दुःखहेतुत्वात्पर्येति पर्यटतीत्यर्थः । अथास्य लिङ्गोपाधिकस्वरूपं सदृष्टान्तमाह—स यथेति । स योग्यः प्रयुज्यत इति प्रयोग्योऽश्वादिर्यथा लोके आचरति गच्छत्यनेनेत्याचरणो रथादिस्तस्मिन् युक्तः । एवं यथादृष्टान्तमेवास्मिन्स्थूलशरीरेऽयं प्राणो लिङ्गाख्यस्तदुपाधिकः प्राज्ञो रथित्वेन युक्त ईश्वरेण नियुक्तः ॥ ३ ॥

**अथ यत्रैतदाकाशमनु विषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद॒ँ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥४॥**

अथानन्तरं यत्र संसारदशायां यदैतत्प्रसिद्धं चक्षुराकाशं कृष्णतारोपलक्षितं देहच्छिद्रं अनुविषण्णमनुयुक्तमनुगतं तदा शारीरः चक्षुषि भवश्चाक्षुषः पुरुषः पूर्वं प्रजापत्युपदिष्टो दर्शनाय रूपाद्युपलब्धिनिमित्तं चक्षुः । चष्टे इति व्युत्पत्तेः । अथ यो वेदेदं वस्तु जिघ्राणि अस्य गन्धं विजानीयामिति यो वेद स आत्मा गन्धाय गन्धविज्ञानाय घ्राणं जिघ्रतीति व्युत्पत्तेः । अथेदं वस्तु अभिव्याहराणि वदिष्यामीति यो वेद स आत्माभिव्याहारायाभिव्याहरणक्रियासिद्धये वागिन्द्रियं भवति वक्तीति व्युत्पत्तेः । अथ यो वेदेदं वाक्यं शृणवानीति स आत्मा श्रवणाय श्रोत्रं शृणोतीति व्युत्पत्तेः ॥ ४ ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥**

अथ यो वेदेदं मन्वानि केवलमनसैव मन्वानि जानामीति यो वेद स आत्मा मनः । मनुत इति व्युत्पत्तेः तच्च मनोऽस्यात्मनो दैवमप्राकृतं चक्षुर्व्यवहितादिज्ञानहेतुत्वात् । स वै एष स्वस्वरूपमापन्नो मुक्त एतेन दैवेन चक्षुषा मनसा एतान्कामान्पश्यन् रमते क्रीडते ॥ ५ ॥

एतान्कान्—

**य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥ इति द्वादशः खण्डः ॥ १२ ॥**

य एते ब्रह्मलोके ब्रह्म लोकनाल्लोकस्तस्मिन् ये एते संकल्पमात्रेण लभ्या इत्युक्तास्तानित्यर्थः । न केवलमेवमिन्द्र एव प्रजापत्युपदेशात्कृतार्थोऽभूत्किंत्वन्येपि इन्द्राच्छ्रुत्वात्मानमुपास्य तथा बभूवुरित्याह—तं वा एतमिति । तं वै इन्द्राय प्रजापतिनोक्तमेतमिन्द्रोक्तमात्मानं देवा अद्यत्वेऽप्युपासते । तस्मादुपासनाच्च तेषां देवानां सर्वे च लोका आत्ताः प्राप्ताः । सर्वे च कामाः आत्ता इत्यर्थः । ननु युक्तमेतत्फलं देवानां महाभाग्यत्वान्न त्वाधुनिकानां कलिकालवर्तिनां मनुष्याणामित्यत आह—स सर्वानिति । यः कश्चित्पुमान् इन्द्रादिवत्तमुक्तरूपमात्मानमाचार्यादिभ्योऽनुविद्य जानाति स्वसंवेद्यतामापादयति स इदानींतनोपि सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोतीति ह प्रजापतिरुवाच । द्विरभ्यासो ब्रह्मात्मैकत्वज्ञानप्रकरणसमाप्त्यर्थः ॥ ६ ॥ इति दशमे द्वादशः खण्डः ॥ १२ ॥

उक्तदहरविद्यायाः शेषभूताञ्जपादिविधानार्थं मन्त्रानाह—

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखा-**

**त्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोक-मभिसंभवामीत्यभिसंभवामीति ॥ १ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥**

श्यामवदत्यन्तं दुरवग्राह्यत्वाच्छ्यामं हार्दं ब्रह्म ध्यानेन ज्ञात्वा तस्माच्छ्यामाद्धार्दाद्ब्रह्मणः सकाशात् शबलउक्तारण्याद्यनेककाममिश्रितत्वाद्ब्रह्मलोकः शबलस्तं प्रपद्ये गच्छेयम् । कुत इत्यपेक्षायामाह—शबलादिति । यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं हार्दं भावं प्रपद्ये प्रपन्नोऽस्मि तस्मात्तमेव प्रकृतिरूपं शबलं प्रपद्य इत्यर्थः । तत्प्राप्तिमनेकदृष्टान्तेनाह—अश्व इति । यथाश्वो रोमाणि लोमानि विधूय कंपनेन श्रमं पांश्वादि च रोमतोऽपनीय निर्मलो भवति । एवं हार्दब्रह्मज्ञानेन पापं धर्माधर्माख्यं विधूयापनीय चन्द्रवद्यथा राहुग्रस्तश्चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवं शरीरं धूत्वा प्रहायेहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामि । इतिशब्दो ध्यातुर्ध्यानसमाप्त्यर्थः । द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥ १३ ॥

दहरोऽस्मिन्नन्तराकाश इत्युक्ताकाशशब्दस्य ब्रह्मविषयत्वमुपपादयति—

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो दिशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कꣳ श्वेतं लिन्दुमाभिगां लिन्दुमाभिगाम् ॥ १ ॥ इति चतुर्दशः खण्डः ॥ १४ ॥**

आकाश इवाकाशोऽव्याकृताख्यो वै एव नाम प्रसिद्धो नामरूपयोर्जगद्बीजयोर्निर्वहिता निर्वोढा व्याकर्ता । ते नामरूपे यदन्तरा यस्य ब्रह्मणोंऽतरा मध्ये वर्तेते तद्ब्रह्म तद्ब्रह्मामृतं स एव च सर्वभूतानामात्मेत्यापरोक्षमेवेत्यर्थः । एवं दर्शितोपास्यस्वरूपोपासकस्य प्रार्थनामन्त्रमाह—प्रजापतेरिति । प्रजापतेश्चतुर्मुखस्य सभां परिषदं वेश्म च प्रपद्ये गच्छेयं । यशः आत्मा चाहं भवामि । तदेव विशिनष्टि—ब्राह्मणानामित्यादिना । ब्राह्मणादीनां यशो देहेन्द्रियादिलक्षणमनुप्रापत्सि प्राप्स्यामि प्राप्तुमिच्छामि । तेषां देहेन्द्रियादीनामात्मा भवामीति

यावत्। उक्तमेव स्वयं परामृशति—स ह्यहं यशसां यश इति। सोऽहं यशसां देहेन्द्रियादिलक्षणानां यश आत्मा। उक्तं प्रार्थनाप्रयोजनमाह—श्येतमिति। श्येतं रोहितं स्त्रीचिह्नं योनिशब्दवाच्यं किंलक्षणं अदत्कं दन्तरहितमप्यदत्कं भक्षयितृ तत्सेविनां। एवंभूतं श्येतं लिन्दु पिच्छिलं अशुद्धं तदेव लक्षणं स्त्रीचिह्नमहं माभिगां मागच्छेयं। तदभिगमनस्य गर्भवासलक्षणस्यात्यंतानर्थहेतुत्वं ज्ञापयितुं पुनर्वचनमित्यर्थः ॥ १ ॥ इति दशमे चतुर्दशः खण्डः ॥१४॥

उक्तविद्यायाः पुरुषोत्प्रेक्षारूपाशंकाव्युदासार्थमनादिपरंपरागतत्वमाह—

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिँसन्त्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥ इति पञ्चदशः खण्डः ॥१५॥**

इति छान्दोग्यब्राह्मणे दशमः प्रपाठकः ॥ १० ॥ उपनिषदि अष्टमः ॥ ८ ॥

---

तदेतत्ससाधनमात्मज्ञानं ह किल तद्वाचकं संदर्भं ब्रह्मा हिरण्यगर्भः प्रजापतये विराडात्मने उवाच। प्रजापतिर्मनवे स्वपुत्राय मनुः प्रजाभ्य उवाचेत्यर्थः। एवं समापितविद्यासाफल्यमुक्त्वा कर्मणोऽपि साफल्यमविद्वत्संतोषार्थमाह—आचार्यकुलादिति। गुरोः यत्कर्म कर्तव्यं तत्कृत्वा तदतिशेषेण कालेन यथाविधानं स्मृत्युक्तप्राङ्मुखत्वाद्यध्यापनविधानमनतिक्रम्याचार्यकुलात्सार्थं वेदमधीत्याभिसमावृत्य धर्मजिज्ञासां परिसमाप्य गुरुकुलान्निवृत्य दारानाहृत्य कुटुंबे गार्हस्थ्ये कर्मणि स्थित्वा शुचौ देशे आसीनः स्वाध्यायं वेदमधीयानः पठमानो धार्मिकान् धर्मयुक्तान् पुत्रान् शिष्यांश्च विदधन् धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्योपसंहृत्य तीर्थेभ्यः शास्त्रानुज्ञाविषयेभ्योऽन्यत्र सर्वाणि स्थावरजंगमानि भूतान्यहिंसन्नऽपीडयन् वर्तेत। स खल्वधिकृतः कुटुंबे एव यथोक्तेन प्रकारेण यावदायुषं याव-

जीवं वर्तयन्देहान्ते ब्रह्मलोकं हिरण्यगर्भाख्यमभिसंपद्यते प्राप्नोति। नच पुनस्ततो ब्रह्मलोकान्महाप्रलयात्पूर्वकाले आवर्तते महाप्रलयानन्तरं च पुनरावर्तते एव। कार्यब्रह्मप्राप्तत्वात्। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १ ॥ इति दशमे पञ्चदशः खण्डः ॥ १५ ॥

**ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मामा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥**

यन्मायादिकमाश्रितं बहुगुणं ब्रह्मचर्यादियुक्तो
हृदावरुध्यमूर्द्धगतया नाड्या प्राप्य सौत्रं पदं (?)।
कामं क्रीडति यत्तुरीयममलं सैकं शताब्दं गुरौ
स्थित्वा देवपतिर्बुबोध तदहं ध्याये नृसिंहाभिधम् ॥ १ ॥

कार्यब्रह्मपदात्ततुङ्गफलवद्ध्यानप्रभेदाचलं
विश्वोद्भूतिविभूतिवादविलसद्वीचीतरङ्गाकुलं।
दैन्यं मुञ्चत भो जना गुरुतरीमारोहतालं श्रमैर्गाहन्तामनवद्यहृद्यमणये छान्दोग्यरत्नाकरं ॥ २ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---



ॐ तत्सद्ब्रह्मणे नमः

# अथ बृहदारण्यकोपनिषत् ।

## मिताक्षराटीकासमलंकृता ।

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ।
योऽनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥ १ ॥
यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म संतापिनः ।
यत्संसारपरिश्रमापहृदयासंशीतलामोदभा-
ग्वन्दे तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥ २ ॥
या काण्वोपनिषत्प्रसिद्धबृहदारण्यश्रुतेः सादरं
तद्भाष्यप्रमुखं विलोक्य विपुला टीका कृता ज्ञानिनाम् ।
रम्या तत्कलनासमर्थमतिभिर्मोक्षेच्छुभिर्योगिभिः
सुज्ञेया तु मिताक्षरा पुनरियं व्याख्या मया रच्यते ॥ ३ ॥

उपनिषच्छब्देन तु मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या । उप समीपस्थं प्रत्यगात्मैकत्वं निश्चितं सत्तत्पराणां सहेतुसंसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्पकत्वेनोपचारादुपनिषदित्युच्यते । बृहत्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशादर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् । ननु काण्डयोर्नियतपौर्वपर्ये कः संबन्ध इति चेच्छृणु । विद्योत्पत्त्यपेक्षितविवेकवैराग्यशमादिमुमुक्षुत्वसंपत्तिहेतुसत्त्वशुद्धिसंपादकतया कर्मकाण्डस्य प्राथम्यं

तज्जनितशुद्ध्यपेक्षया तत्त्वज्ञानजनकत्वाज्ज्ञानकाण्डस्य नियतमुत्तरभावित्वमित्युपायोपेयभावः काण्डयोः संबन्ध इति ब्रूमः। तत्र क्रतुश्रेष्ठस्याप्युपास्तिसहितस्याश्वमेधस्य हिरण्यगर्भत्वरूपसंसारफलत्वमेवेति प्रदर्शिते किमु वक्तव्यमल्पीयसामग्निहोत्रादीनां संसारफलत्वमित्यर्थात्प्रदर्शनेन वैराग्योत्पत्तिर्भवत्वित्यभिप्रायेणाश्वमेधानधिकारिणामश्वमेधविज्ञानादपि तत्फलसिद्ध्यर्थं तावत्क्रत्वङ्गप्रधानभूताश्वविषयदर्शनमुषा वा इत्यादिप्रथमकण्डिकयाऽऽह—

**ॐ उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माꣳसानि। ऊवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥**

उषा वै ब्राह्मो मुहूर्तः प्रसिद्धः। मेध्यस्य मेधार्हस्य यज्ञियस्याश्वस्य शिरः। शिरस्युषादृष्टिः कर्तव्या। कालावयवानां शरीरावयवानां च मध्य उषःशिरसोः प्रधानत्वसामान्यात्। अङ्गेष्वनङ्गमतिः पशुसंस्कारार्था। तथाचाश्वमेधाधिकारी सत्यश्वे कर्मणो वीर्यवत्त्वार्थं कालादिदृष्टिमश्वावयवेषु कुर्यात्तदनधिकारी त्वश्वाभावेऽप्यात्मानमश्वं कल्पयित्वा शिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं संपाद्य प्रजापतिरस्मीति ज्ञानात्तद्भावं प्रतिपद्यते कालाद्यात्मकत्वात्प्रजापतेः। सूर्यश्चक्षुरश्वचक्षुषि सूर्यदृष्टिः कर्तव्या। उषसः शिरसश्च सूर्यचक्षुषोरानन्तर्यसामान्यात्। अश्वस्य प्राणो वातो बाह्यो वायुरिति दृष्टिः कर्तव्येति सर्वत्र व्याख्येयं चलनत्वसामान्यात्। अश्वस्य व्यात्तं विवृतं मुखं वैश्वानरोऽग्निः। वैश्वानरग्रहणं तु क्रव्यादाग्निव्यावृत्त्यर्थम् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुत्यन्तरात्। आत्माऽश्वशरीरं संवत्सरः। उभयोः शरीरका-

लावयवानां हस्तमासादीनामात्मत्वसामान्यात् । अश्वस्य मेध्यस्य पृष्ठं द्यौर्द्युलोक ऊर्ध्वत्वसामान्यात् । अश्वस्य मेध्यस्येति पुनर्वचनं तु प्रत्येकमनुषङ्गार्थम् । अश्वस्योदरमन्तरिक्षमाकाशः सुषिरत्वसामान्यात् । पाजस्यमित्यत्रार्थेकाले जकारस्थाने दकारकरणेन पादा अस्यन्ते स्थाप्यन्तेऽस्मिन्निति पादस्यं पाजस्यं पादासनस्थानं खुरलक्षणं पृथिवी । आधारत्वादिसामान्यात् । अश्वपार्श्वे दिशः पूर्वाद्याश्चतस्रोऽपि । न च पार्श्वयोर्दिशां च संख्यावैषम्यात्तयोस्तद्दृष्टिकरणमयुक्तमिति वाच्यम् । अश्वस्य चरिष्णुत्वेन सर्वमुखत्वोपपत्तेरश्वपार्श्वाभ्यां क्रमेण सर्वदिक्संबन्धसामान्यात् । पर्शवः पार्श्वास्थीन्यवान्तरदिश आग्नेय्याद्याः । उभयोः पार्श्वदिक्संबन्धसामान्यात् । अङ्गान्यनुक्तानि वक्ष्यमाणशरीरावयवरूपाणि ऋतवो वसन्ताद्याः । उभयोः शरीरसंवत्सराङ्गत्वसामान्यात् । पर्वाणि संधयो मासाश्चैत्रादयोऽर्धमासाश्च शुक्लपक्षादयः पुनः पुनरावर्त्यमानाः । उभयोः शरीरसंवत्सरसंधिसामान्यात् । प्रतिष्ठाः प्रतितिष्ठत्येतैरिति प्रतिष्ठाः पादा अहोरात्राणि प्राजापत्यदैवपित्र्यमानुषाणि बहुवचनात् । एताभ्यां ह्यश्वसंवत्सरात्मानौ प्रतितिष्ठत इति प्रतिष्ठितत्वसामान्यात् । अस्थीनि प्रसिद्धानि नक्षत्राणि शुक्लत्वसामान्यात् । मांसानि प्रसिद्धानि नभो नभस्था मेघा न प्रसिद्धमन्तरिक्षं तस्योदरत्वोक्तेरुभयो रुधिरोदकसेचकत्वसामान्यात्, ऊवध्यमर्धजीर्णमशनं सिकता वालुकाः । विश्लिष्टावयवत्वसामान्यात् । गुदा नाड्य एव सिन्धवो नद्यः स्यन्दनवत्त्वे सति बहुत्वसामान्यात् । यकृच्च क्लोमानश्च हृदयस्याधस्थौ दक्षिणोत्तरौ मांसपिण्डौ पर्वताः काठिन्योच्छ्रयत्वसामान्यात् । लोमान्योषधयो व्रीह्यादयः क्षुद्रत्वसामान्यात् । लोमग्रहणस्य केशानामप्युपलक्षणत्वेन केशा वनस्पतय आम्रादयो महत्त्वसामान्यात् । पूर्वार्धमश्वस्य नाभेरूर्ध्वभाग उद्यन्नुद्गच्छन्मध्याह्नपर्यन्तमूर्ध्वं गच्छन्सवितेति ध्येयं पूर्वत्वसामान्यात् । जघनार्धो नाभेरधोभागो निम्लोचन्नाम मध्याह्नादस्तं गच्छन्सविताऽपरत्वसामान्यात् । यद्विजृम्भत इत्यादौ प्रत्ययार्थस्याविवक्षितत्वाद्यद्विजृम्भणं गात्राणां विनामनेन मुखविदारणं तद्विद्योतनं प्रसिद्धमुभयोर्मुखमेघविदारकत्वसामान्यात् । यद्विधूननं गात्रकम्पनं तत्स्तनितं गर्जनशब्दसामान्यात् । यन्मेहनं मूत्रकरणं तद्वर्षणं भूसेचनत्वसामान्यात् । अस्याश्वस्य वाग्हेषितशब्दो वागेव हेषितशब्द एव । नात्राऽऽरोपणीयमस्तीत्यर्थः ॥ १ ॥

अथाश्वस्तुत्यर्थमेव तत्संज्ञपनात्प्रागूर्ध्वं च ग्रहवर्तनतत्स्थानविषयं दर्शनमाह 'अहर्वा' इत्यादि 'संबभूवतुः' इत्यन्तेन—

**अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥ इति प्रथमाध्यायस्य प्रथमं ब्राह्मणं ॥ १ ॥**

पुरस्तात्संज्ञपनात्पूर्वमश्वमनुलक्षीकृत्य महिमा महत्त्वोपेतत्वान्महिमाख्यः सौवर्णो ग्रहोऽजायत प्रावर्तत सोऽहर्दिनं वै दीप्तिसामान्यात् । तस्य सौवर्णस्य ग्रहस्य पूर्वे समुद्रे पूर्वः समुद्रो योनिरासादनस्थानं पूर्वत्वसामान्यात् । योऽयं महिमा राजतो ग्रह एनमश्वमनुलक्षीकृत्य पश्चादश्वसंज्ञपनानन्तरमजायत प्रावर्तत स रात्रिर्वर्णसामान्याज्जघन्यत्वाद्वा । तस्य राजतस्य ग्रहस्यापरे समुद्रेऽपरः समुद्रो योनिरपरत्वसामान्यात् । एतौ वै महिमानौ ग्रहावश्वमभितः पुरतः पृष्ठतश्च संबभूवतुः प्रावर्तेतामित्यश्वस्तुत्यर्थकं पुनर्वचनमश्वस्तुत्यर्थमेवैतद्ग्रहदर्शनं न स्वतन्त्रमितिद्योतनार्थम् । अत एवाश्वस्य स्तुतिमाह—हयो भूत्वेत्यादिना । अत्र हयादयो जातिविशेषाः । सोऽश्वो हयो भूत्वा देवानवहद्देवत्वमगमयत् । तस्य प्रजापतिरूपत्वात् । देवानां वोढा वाऽभवत् । तथा वाजी भूत्वा गन्धर्वानर्वा भूत्वाऽसुरानश्वो भूत्वा मनुष्यान् । अवहदिति प्रत्येकं संबध्यते । समुत्पद्य भूतानि द्रवन्ति लयं गच्छन्त्यस्मिन्निति समुद्रः परमात्मा स एवास्य बन्धुर्बध्यतेऽनेनेति बन्धुर्बन्धनम् । समुद्र एव पूर्वोक्तो योनिरुत्पत्तिकारणम् । एवमसौ शुद्धजन्मा शुद्धस्थितिः शुद्धलयश्चेति स्तूयते । 'अप्सु योनिर्वा अश्वः' इति श्रुत्यन्तरात्प्रसिद्ध एवासौ समुद्रो योनिरित्यर्थः ॥ २ ॥ इति प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

एवमश्वमेधे मुख्याङ्गभूताश्वविषयं दर्शनं विधायेदानीमाश्वमेधिकाग्निविषयं दर्शनं वक्तुं तत्स्तुत्यर्थतया तदुत्पत्तिप्रस्तावं तावदाह—

**नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमा-**

**सीत्। अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कꣳ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥**

इह संसारमण्डलेऽग्रे मनआदेरुत्पत्तेः प्राकिञ्चन किञ्चिदपि नामरूपविभक्तविशेषं नैवाऽऽसीन्न बभूव। तर्हि किं प्रागुत्पत्तेः शून्यमेव बभूवेत्यत आह—मृत्युनेति । मृत्युना मायाशबलितलक्षणमूलकारणेन सूत्रात्मरूपेण हिरण्यगर्भात्मकसूक्ष्मशरीरमापन्नेनेदं नामरूपप्रविभक्तं जगदावृतमासीन्नपुनः शून्यमासीद्यच्चाऽऽव्रियते येन चाऽऽव्रियते तदुभयोः सर्वथाऽभावे मृत्युनैवेदमावृतमासीदिति नावक्ष्यन्न हि संभवति गगनकुसुमच्छन्नो वन्ध्यासुत इति। किंलक्षणेन मृत्युनेत्यत आह—अशनाययेति। अशितुमिच्छाऽशनाया तया लक्षणभूतया लक्षितेन मृत्युना बुद्ध्यादितादात्म्यमापन्नेनोक्तस्वरूपेणेत्यर्थः। कथं तया मृत्युर्लक्ष्यते तत्राऽऽह—अशनायेति। अशनाया ह्यशनायावान्प्रसिद्धो मृत्युर्यो ह्यशितुमिच्छति स तदिच्छानन्तरमेव जन्तून्हन्तीति प्रसिद्धमित्यतस्तया तद्वान्मृत्युर्लक्ष्यत इति युक्तमित्यर्थः। एवं कार्यस्य प्रागवस्थामभिधाय तदुत्पत्तिप्रकारमाह—तदिति। स प्रकृतो हिरण्यगर्भाख्यो मृत्युर्यत्स्रष्टव्यालोचनक्षमं तन्मनःशब्दवाच्यं संकल्पादिलक्षणं करणमकुरुत कृतवान्। केनाभिप्रायेणेत्यत आह—आत्मन्वीति। अहमनेनाऽऽत्मना मनसाऽऽत्मन्वी मनस्वी स्यां भवेयमित्यभिप्रायेण। अभिव्यक्तीकृतस्य मनस उपयोगमाह—स इति। स मृत्युरर्चन्नर्चयन्पूजयन्नात्मानमेव कृतार्थोऽस्मीत्यचरच्चरणं कृतवान्। तस्य मृत्योरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्त। अत्र हैरण्यगर्भे सर्ग आकाशादिप्रभृतीनां त्रयाणां पञ्चीकृतानामुत्पत्त्यनन्तरमुत्पन्ना इति बोद्धव्यम्। अर्चते पूजां कुर्वते वै मे मह्यं कमुदकमभूदिति यस्मान्मृत्युरमन्यत तदेव तस्मादेव हेतोरर्कस्याग्नेर्वक्ष्यमाणस्याश्वमेधक्रतूपयोगिकस्यार्कत्वमेतन्नाम्नोपास्यत्वाय। एतद्विधानविदोऽवान्तरफलमाह—कमिति। य एवं यथोक्तमेतदर्कस्यार्कत्वं वेद ह वै निश्चितमस्मा उपासकाय कमुदकं सुखं वा भवति नामसामान्यादित्यर्थः ॥ १ ॥

अथाब्भ्यः सकाशात्पृथिवीद्वाराऽग्न्युत्पत्तिमाह—

**आपो वा अर्कस्तद्यदपा शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततााग्निः ॥ २ ॥**

आपो वा अर्क इति गौण्या वृत्त्योच्यते । भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवस्याग्नेः स्थितत्वादयमग्निरर्क इति च वक्ष्यमाणत्वात् । तत्तत्राप्सु भूतान्तरसहितासूत्पन्नासु सतीषु यदपां शर आसीत्कारणस्योच्छूनत्वलक्षणो दध्न इव मण्डभूतं बभूव तत्तेजसा बाह्यान्तः पच्यमानं समहन्यत संघातमापद्यत कठिनमभूत्सा पृथिव्यभवत् । ताभ्योऽद्भ्यो विराट्शब्दवाच्यमण्डमभवदितियावत् । तस्यां पृथिव्यामुत्पादितायां स मृत्युरश्राम्यल्लोकवच्छ्रमयुक्तो बभूव । तस्य मृत्योः श्रान्तस्यात एव तप्तस्य खिन्नस्य तेजोरसस्तेज एव रसस्तेजोरसोऽग्निरूपो विराडभिमानी प्रजापतिश्चतुर्मुखब्रह्मशब्दवाच्यः प्रथमशरीरी निरवर्ततोत्पन्न इत्यर्थः ॥ २ ॥

एवमुत्पन्नस्य विराजो ध्यानार्थमाह—

**स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

स मृत्युर्हिरण्यगर्भात्मैव विराडनुपमर्दनेन त्रेधा त्रिप्रकारमात्मानं कार्यकरणसंघातं स्वयमेव व्यकुरुत व्यभजत् । कथं त्रेधेत्यत आह—आदित्यमिति । आदित्यं तृतीयमग्निवाय्वपेक्षया व्यकुरुत । तथाऽग्न्यादित्यापेक्षया वायुं तृतीयम् । तथा वाय्वादित्यापेक्षयाऽग्निं तृतीयमिति द्रष्टव्यम् । स त्रेधाऽऽत्मानमित्युपक्रमात् । सशब्देनाव्यवहितविराडात्मपरामर्शशङ्कां वारयति—स इति । स एष मृत्य्वात्मा प्राणः सूत्रभूत एवाग्निवाय्वादित्यरूपेण स्वोत्पन्नविराडनुपमर्दनेन त्रेधा विहितो विभक्त इत्यर्थः । अथास्य विराजोऽग्नेरर्क-

नाम्नोऽश्वस्यैव संस्कारार्थं दर्शनमाह—तस्येति। तस्य चित्यस्याग्नेः शिरः प्राची दिगुत्कृष्टत्वसामान्यात्। अग्नेरीर्मौ बाहू असौ चासौ चैशान्याग्नेय्यौ पार्श्वदिक्संबन्धसामान्यात्। अन्ययोर्बाह्वोः पार्श्वसंबन्धो वर्तते। अनयोरपि दिशोः पार्श्वत्वेन कल्प्यमानदक्षिणोत्तरदिक्संबन्धः समान इत्यर्थः। अथानन्तरमस्य चित्याग्नेः प्राङ्मुखस्य पुच्छं जघन्यो भागः प्रतीची पश्चिमा दिग्जघन्यत्वसामान्यात्। अग्नेः सक्थ्यौ सक्थिनी पृष्ठनिष्ठोन्नतास्थिनी असौ चासौ च वायव्यनैर्ऋत्यौ पृष्ठकोणत्वसामान्यात्। अग्नेः पार्श्वे दक्षिणा चोदीची चोभयदिक्संबन्धसामान्यात्। द्यौः पृष्ठमन्तरिक्षमुदरमित्युक्तार्थम्। उर इयं पृथिवी। अधोभागत्वसामान्यात्। अथोपास्याग्नेरप्प्रतिष्ठितत्वं गुणमाह—स इति। स एषोऽग्निः प्रजापतिरूपो लोककालाद्यात्मकोऽप्सु कारणभूतासु पञ्चीकृतासु प्रतिष्ठितः। एतद्गुणोपासनफलमाह—यत्रेति। अग्नेरेवमप्सु प्रतिष्ठितत्वं विद्वान्यत्र क्व चैति गच्छति तत्तत्रैव प्रतितिष्ठति प्रतिष्ठां प्राप्नोतीत्यर्थः॥ ३॥

यो मृत्युरबादि प्रतिपद्येमं विराजमसृजतेत्युक्तः स केन व्यापारेणेत्याकाङ्क्षायामुत्तरो ग्रन्थः। यद्वा तेजोरसो निरवर्तताग्निरित्यत्रात्तुः सर्ग उक्तः संप्रति तस्य स्थित्यर्थमन्नसर्ग उच्यते—

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत्॥ ४॥**

स प्रकृतो मृत्युर्मनःकरणकः सूत्रात्माऽकामयत कामितवान्। किम्। सूक्ष्मशरीरापेक्षया द्वितीयो मे ममाऽऽत्मा शरीरं स्थूलं जायेतोत्पद्येतेति। स मृत्युर्मनसा पूर्वोत्पन्नेन वाचं वेदत्रयीलक्षणां मिथुनं द्वंद्वभावं समभवत्समभावयन्मनसा त्रय्यालोचनलक्षणं संभवनं कृतवान्। त्रयीविहितसृष्टिक्रमं मनसाऽन्वालोचयदिति यावत्। सोऽकामयतेत्यत्र सर्वनाम्नाऽव्यवहितपूर्वोक्तवैश्वानरपरा-

मर्शशङ्का मा भूदित्येतदर्थं कामनावन्तं विशिनष्टि—अशनाया मृत्युरिति। एतन्मृत्योर्विशेषणं छान्दसम्। तथाचाशनायोपलक्षितो मृत्युः पूर्वोक्त एवात्र परामृष्टव्यो नेतरः। तत्तत्र मिथुने यद्रेतो बीजं प्रथमशरीरिणः प्रजापतेरुत्पत्तिकारणभूतं जन्मान्तरीयं ज्ञानकर्मरूपमासीत्तत्रय्यालोचनेन पश्यन्मृत्युस्तद्भावभावितः सन्नपः सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः स मृत्युः संवत्सरोऽभवत्संवत्सरकालनिर्माताऽऽदित्यो बभूव ततस्तस्मात्संवत्सरकालनिर्मातुरादित्यात्मनो मृत्योः पुरा पूर्वं संवत्सरः कालविशेषो नाऽऽस न बभूव। हेति प्रसिद्धम्। तं 'संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह लोके संवत्सरः प्रसिद्ध एतावन्तं कालमबिभर्भृतवान्मृत्युः एतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वं तं वैराजमसृजत सृष्टवानण्डमभिनदिति यावत्। तमेवं सृष्टं प्रथमशरीरिणं कुमारं मृत्युरत्तुमभिव्याददान्मुखव्यादानं कृतवान्। तेन तस्मिन्कृते सति स उत्पन्नः कुमारः स्वाभाविक्याऽविद्यया युक्तो भीतः सन्भाणित्येवं शब्दमात्रमकरोत्सैव वाक्शब्दसामान्यमभवज्जातमित्यर्थः॥ ४॥

अथर्गादिसृष्टिमुपदेष्टुं पीठिकामाह—

**स ऐक्षत यदि वा इममभिमँस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनाऽऽत्मनेदँ सर्वमसृजत यदिदं किंचर्चो यजूँषि सामानि च्छदाँसि यज्ञान्प्रजाः पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वँ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद॥ ५॥**

स मृत्युरशनायावानपि कृतरवं कुमारमालोक्यैक्षतेक्षितवान्विचारमकरोत्। वै प्रसिद्धम्। इमं कुमारं स्रष्टव्यान्नहेतुभूतं यद्यहमभिमंस्ये हिंसिष्ये तदाऽन्नं कनीयोऽल्पीयः करिष्ये बीजभक्षणादिव। बहु च कर्तव्यं दीर्घकालभक्षणायेति विचार्य तद्भक्षणादुपरराम। एवं स मृत्युः क्रमेण तया वाचा कुमारवदननिर्गतया तेनाऽऽत्मना कुमारस्वरूपमापन्नेनेदं वाच्यवाचकरूपं सर्वं जगदसृजत। किं च यदिदम्। ऋचो नियताक्षरपादबन्धसमन्विता मन्त्रविशेषाः।

यजूंष्यनियताक्षरपादाः । ऋच एव स्तोभाक्षरसंयुक्ताः सामानि । छन्दांसि गायत्र्यादीनि । तैर्विशिष्टानेतान्मन्त्रानसृजतेति यावत् । यज्ञांस्तत्साध्यान् । प्रजास्तत्कर्त्रीः । पशूंश्च ग्राम्यारण्यान्कर्मसाधनीभूतानेवमसृजत । स मृत्युर्यद्यदेव क्रियां तत्साधनं फलं वाऽसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः । सर्वं कृत्स्नं वा अत्ति यस्मात्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम् । एतद्गुणफलमाह—सर्वस्येति । य एतददितेर्मृत्योरदितित्वं गुणं यथोक्तं वेदोपासीत स सर्वात्मा भूत्वाऽदितिवत्सर्वस्यैतस्यात्ता भवति सर्वमन्नमेवास्य भवति सदा न कदाचिदस्यात्ता भवतीति वक्तुं पुनर्वचनमित्यर्थः ॥ ५ ॥

अथाश्वाश्वमेधयोर्निर्वचनमुपोद्धातपूर्वकमेष ह वा अश्वमेध इत्यतः प्राक्तनेनाऽऽह—

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥**

स मृत्य्वात्मा प्रजापतिर्भूयसा यज्ञेन भूयोदक्षिणावत्त्वेन भूयान्यज्ञोऽश्वमेधस्तेन भूयो यजेय पुनरपि यक्ष्य इत्यकामयत । भूयःशब्दस्तु पूर्वजन्मकरणापेक्षया । एवं महत्कार्यं कामयित्वा स मृत्य्वात्मा विराडश्राम्यल्लोकवत् । स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्येति पूर्ववत् । यशो वीर्यमुदक्रामदित्येतयोः स्वयमेवार्थमाह—प्राणा इति । प्राणाश्चक्षुरादयो वै यशस्तद्धेतुत्वात्तथा शरीरे वीर्यं बलं त एव । न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति । एवंभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निर्गतेषु प्रजापतेस्तच्छरीरं श्वयितुमुच्छूनभावं गन्तुमध्रियताऽऽरब्धममेध्यं चाभवत् । तस्य मृत्योः शरीरान्निर्गतस्यापि शरीर एव मन आसीदासङ्गाद्विषयासक्तस्येव विषय इत्यर्थः ॥ ६ ॥

ननु तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदित्यपेक्षायामाह—

**सोऽकामयत मेध्यं म इदꣳ स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा**

**अश्वमेधं वेद य एनमेवं वेद तमनवरुध्येवामन्यत । तꣳ संवत्सरस्य परस्तादात्मन आलभत पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥ इति प्रथमाध्यायस्य द्वितीयमग्निब्राह्मणम् ॥ २ ॥**

स शरीरान्निर्गतोऽपि प्रजापतिः सामर्थ्यातिशयान्ममेदं शरीरं मेध्यं मेधार्हं यज्ञियं स्याद्भवेदहं चानेन शरीरेणाऽऽत्मन्व्यात्मवाञ्शरीरवान्स्यां भवेयमित्यकामयत तत्पुरःसरं प्रविवेशेति यावत् । यद्यस्माच्छरीरं मद्वियोगाद्गतयशोवीर्यं सदश्वदश्वयत्ततस्तस्मादश्वः समभवत्तथाच शरीरतद्वतोरभेदविवक्षयाऽयमश्वः साक्षात्प्रजापतिरेवेति स्तूयते । गतयशोवीर्यत्वादमेध्यं सन्मत्प्रवेशात्तच्छरीरं मेध्यमभूदिति यस्मात्तदेव तस्मादेवाश्वमेधस्य क्रतोरश्वमेधत्वमश्वमेधनामलाभस्तथाच क्रियाद्यात्मकः क्रतुः साक्षात्प्रजापतिरेवेति स्तूयत इत्यर्थः । एवमुषा वा नैवेहेत्यादिनाऽश्वाग्न्योरुपासनमुक्तम् । इदानीं तदुभयमेकमेवेति विशिष्टोपासनं विधातुं प्रधानविधिमाह—एष ह वा इति । यः कश्चिदेनमश्वमग्निरूपमर्कं चैवमुषा वा इत्यादिनोक्तरूपेण तमनवरुध्येवामन्यतेत्यारभ्य प्रदर्श्यमानप्रकारेणैष ह वा अश्वमेधो य एष तपतीत्यादिना सो पुनरेकैव देवता भवति मृत्युरित्यन्तेन वक्ष्यमाणविशेषेण च विशिष्टं वेदोपास्ते स एषोऽश्वमेधं वेद नान्यस्तस्मादेवंविधमश्वमेधं प्रजापतित्वकाम उपासीतेति विशिष्टविधिरिति वाक्यार्थः । तत्र पशुविषयं तावद्दर्शनमाह—तमिति । प्रजापतिर्भूयो यज्ञेन भूयो यजेयेतिस्वीयसंकल्पानुगुणत्वेन स्वदेहस्यैवाश्वत्वं कल्पयित्वा तमश्वमनवरुध्येवावरोधमकृत्वेव मुक्तप्रग्रहमुत्सृष्टममन्यताचिन्तयत् । तमात्मरूपमश्वं संवत्सरस्य द्वादशमासपरिमितस्य कालस्य परस्तादूर्ध्वमात्मन आत्मार्थं प्रजापतिदेवताकत्वेनाऽऽलभताऽऽलम्भं कृतवान् । पशून्ग्राम्यानारण्यांश्च देव-

